गङ्गा!

गङ्गा मात्र जलधारा ही नहीं, युगों से बहती आ रही भारतीय परम्परा की धारा है; तटों पर बसी सभ्यता संस्कृति की धारा है; गङ्गा सच्चिदानन्दा है, मकरासनस्था है, सदानीरा है; सदा से होता आया है इसकी महिमा का गान, सुधा सौन्दर्य का ध्यान, तोयामृत का पान; किन्तु अपनों के अत्याचारों से रूठी है आज गङ्गा, दुःखी है, मूर्च्छित हो रही है अपनों द्वारा किये जा रहे पापों से; मलिन है आज भारत की प्राणधारा, जर्जर है प्रदूषणों से;

आज आवश्यकता है उसके प्राचीन गौरव और सांस्कृतिक वैभव की ओर मुड़कर देखने की; उसे पुनः स्वच्छ बनाने के दृढ़ संकल्प की;

इसी अन्तर्वेदना ने 'रक्षत गङ्गाम्' काव्य रचना की प्रेरणा दी है।

इस कोमल काव्याभिव्यक्ति में कहीं स्वर्धुनी का निर्मल उज्ञ्वल सौन्दर्य उद्भासित है, कहीं प्रदूषण से भयभीत गङ्गा की वेदना की मूक कराह है, कहीं प्रदूषिता का मुखरित आर्तनाद है तो कहीं रक्षा की करुण पुकार है!

प्राञ्जल भाषा में भावों की मधुर झङ्कृति अलङ्कारों की सहज सज्जा एवं छन्दों की विविधता में एकाकार हो गई है, वर्णनों में तथ्यों का यथायथ सन्निवेश है।

गङ्गा सेवा भारत सेवा है, गङ्गा रक्षा आत्मरक्षा है, गङ्गा प्रदूषण सम्पूर्ण मानव सभ्यता का प्रदूषण है; इस विकट सङ्कट से उबरने के लिए विचार क्रान्ति की अपेक्षा है, पुनर्जागरण की आवश्यकता है। 'रक्षत गङ्गाम्' गङ्गा रक्षा के लिए इसी नव जागरण का आह्वान है, पर्यावरण चेतना एवं प्रकृति संतुलन के प्रति सावधान करने की सचेत वाणी है, यन्त्रयुगीन अंधेरे में घिरे हुए मानव के लिए दीपशिखा है।

# रक्षत-गङ्गाम्

## (गङ्गा-सप्तशती)

(हिन्दी भावानुवाद सहित)

'श्रीकिशोरीकिङ्करी'
**डॉ. कमला पाण्डेय**
उपाचार्य, संस्कृत-विभागाध्यक्ष, वसन्त कन्या महाविद्यालय
कमच्छा, वाराणसी

अंग्रेजी भावानुवाद

**डॉ. अनुराधा बैनर्जी**
उपाचार्य, अंग्रेजी-विभागाध्यक्ष, वसन्त कन्या महाविद्यालय
कमच्छा, वाराणसी

प्रकाशक
Shreemata
श्रीमाता
Publications
सत्साहित्य, सद्-विचार, सद्-व्यवहार, सद्-गति

*Rakṣata Gangām* (Retrieve Gangā) -- by Kamala Pandey
(Translated into English -- by Anuradha Banerjee)

---

**रक्षत गङ्गाम्** (गङ्गा-सप्तशती महाकाव्य)



प्रथम संस्करण १९९९

मूल्य- ३००.००

आवरण एवम् अलङ्करण
**श्रीमती अञ्जना चटर्जी**
वरिष्ठ प्रवक्ता-कलाविभाग
वसन्त कन्या महाविद्यालय, कमच्छा, वाराणसी

प्रकाशक
**श्रीमाता पब्लिकेशन्स**
बी ४/६० हनुमानघाट, वाराणसी
दूरभाष - ३१४४३९।

अक्षर संयोजक
श्रीमाता कम्प्यूटर्स,

मुद्रक
महावीर प्रेस, भेलूपुर, वाराणसी



श्रीमत्परमहंस परिव्राजकाचार्य पदवाक्यप्रमाण-पारावारपारीण अनन्त श्रीविभूषित ज्योतिष् एवं द्वारकाशारदापीठाधीश्वर जगद्गुरु शङ्कराचार्य स्वामिश्रीस्वरूपानन्दसरस्वती जी महाराज का शुभाशीर्वाद।

गङ्गावतरण भारत की प्रमुख ऐतिहासिक घटनाओं में से एक है। इस महानदी के आविर्भाव ने भारत के मानचित्र को ही बदलकर रख दिया है। गङ्गा की महिमा का वर्णन वेदों से लेकर सम्पूर्ण अवान्तर साहित्य में भरा पड़ा है। हमारी संस्कृति व सभ्यता का विकास इसी के तट पर हुआ, हमारे पूर्वज ऋषि-महर्षियों ने इसी के पावन तट पर समाधिस्थ होकर वेदों का साक्षात्कार किया, दर्शन शास्त्रों के अज्ञेय रहस्यों को खोला और उपनिषदों में निगूढ़ अनुभूति की अभिव्यञ्जना की।

वर्षों तक संग्रह कर रखने पर भी विकृत न होना-कीड़े आदि उत्पन्न न होना - गङ्गाजल की वह विलक्षण विशेषता है जो संसार की किसी अन्य नदी के जल में नहीं मिलेगी। पाश्चात्य एवं पौरस्त्य सभी गङ्गाजल के इस महत्त्व को स्वीकार करते हुए उसे आन्त्रिक रोगों की दिव्यौषधि मानते हैं।

पर यह कैसा दुर्भाग्य है कि भौतिकवादी चाकचिक्य में गङ्गा आज उपेक्षिता हो गई है, उसका प्रत्यक्ष नदी रूप अनुदिन प्रदूषित होता जा रहा है। यह मानव सभ्यता के लिए महान भावी सङ्कट का ही सङ्केत है।

इस विभीषिका को अनुभव करते हुए कवयित्री की काव्य साधना 'रक्षत गङ्गाम्' महाकाव्य के रूप में प्रवाहित हुई है, जो गङ्गारक्षा के लिए लोकमानस को सचेत करने का एक सार्थक प्रयास है।

'रक्षत गङ्गाम्' के प्रकाशन के अवसर पर हम अपना मङ्गलाशीष प्रदान करते हैं तथा भगवती शारदाम्बा और भगवान् चन्द्रमौलीश्वर से प्रार्थना करते हैं कि भविष्य में भी लेखिका ऐसी रचनाओं से साहित्य जगत् को समृद्ध करती रहे।

स्वरूपानन्द सरस्वती

# शुभाशंसा

गङ्गा का संकट सभ्यता का संकट है। सभ्यता के संकट से मानव जाति त्रस्त है। भोगवादी प्रवृत्ति प्रकृति के साथ कसाई सा व्यवहार कर रही है। विकास की अवधारणा में बेहोश आज के कर्णधार समाजवादी जीवन की प्रतीक गङ्गा में बांध बनाकर उसे पूंजीवादी शिकंजे में कस रहे हैं। आज धरती, प्रकृति और मानव के दुःखों को मिटाने के लिये तीन प्रकार के लोगों की आवश्यकता है । ज्ञान के प्रतीक मानवतावादी वैज्ञानिकों की, कर्म के प्रतीक आन्दोलनकारी सामाजिक कार्यकर्ताओं की एवं भक्ति के प्रतीक करुण–हृदय साहित्यकारों एवं कलाकारों की। ये तीनों जन हृदय को आलोकित कर समाज परिवर्तन करेंगे। आज इन्कलाब लाने वाले बीज, जो तेजी से नष्ट हो रहे हैं, की रक्षा करना है। विफल तकनीकी क्रान्ति वाले इस युग में अब मानवीय संवेदना की क्रान्ति की आवश्यकता है जो यह बता सके, अहसास करा सके कि गङ्गा हमारी माँ है।

'रक्षत गङ्गाम्' इसी मानवीय संवेदना की सजीव अभिव्यक्ति है। मैं इस काव्य की रचना के लिए अपनी शुभकामना देता हूं और कवयित्री को आशीर्वाद से अभिनन्दित करता हूं।

गङ्गा हिमालय कुटी
टिहरी –गढ़वाल

सुन्दरलाल बहुगुणा
29-9-96

सुन्दर लाल बहुगुणा

नगरे नगरे ग्रामे ग्रामे विलसतु संस्कृत-वाणी।
सदने सदने जन-जन-वदने जयतु चिरं कल्याणी।।

# सार्वभौम-संस्कृत-प्रचार-संस्थानम्

(देश-विदेशयोः संस्कृतभाषायाः प्रचारार्थं सञ्चालितं प्रतिष्ठानम्)


वासुदेव द्विवेदी शास्त्री
(सञ्चालकः)

डी. ३८/११० हौजकटोरा,
वाराणसी-१
दूरभाष : ३५३०१२


---

## हार्दिकी शुभाकाङ्क्षा

सुविमल-भाव-तरङ्गा
नव-नव-कमनीय-कल्पनासङ्गा।
गङ्गासप्तशतीयं
भव-भय-भङ्गाय जायतां जगतः ।।१।।

एषा च सप्तशतिका
सरस-मधुर-पद्यपुञ्ज-सङ्गीतैः।
दिशि-दिशि शशिकर-धवलां
'कमला'ऽमल-कान्ति-कीर्तिमातनुताम् ।।२।।

अभिनव-रचनोद्यानं
देवगिरो नव्य-भव्य-सुममेतत् ।
सुरभीकरोतु कविकुल-
गुञ्जद् -भृङ्गालि-सेवितं सततम् ।।३।।

इति गङ्गासप्तशती-ललितकविता-रसपानमुग्धमनसः
वासुदेव द्विवेदि शास्त्रिणः
(सञ्चालकस्य)

२५-२-१९९९

# समीक्षणम्

त्याग, तपस्या और तपोवन की विशुद्ध शाश्वत चेतना से अनुप्राणित वाल्मीकि-व्यास-कालिदास आदि महाकवियों की सशक्त वाणी ने भारतीय संस्कृति के उस महनीय स्वरूप को प्रकाशित किया है जिसमें जीवन और जगत् की एकाकारता पदे-पदे उपलब्ध है। इस संस्कृति में न त्याग की प्रधानता है न भोग की, अपितु दोनों का समन्वय अभीष्ट है। इसीलिये गृहस्थ और संन्यास-जिसके मूल आधार ब्रह्मचर्य और वानप्रस्थ हैं, को जीवन के अनिवार्य अङ्ग के रूप में स्वीकार किया गया है। गृहस्थों के लिए नगर और संन्यास के लिए अरण्य की उपयोगिता अपरिहार्य है। नगर और अरण्य का सन्तुलन पर्यावरण को शुद्ध रख सकता है। इसी क्रम में दोनों प्रकार के आश्रम ध र्मियों के लिए शुद्ध पर्यावरण संवाहिका, अन्नौषधि उत्पादिका तथा भुक्ति-मुक्ति - उभयोपपादिका भगवती गङ्गा को भारत ने सर्वदा आध्यात्मिक परिचिति दी है । यही कारण है कि ऋषियों के मत में गङ्गाजल जल नहीं, ब्रह्मद्रव है।

दुर्भाग्यवश दीर्घकाल तक भारत के विदेशी आक्रान्ताओं के अधीन हो जाने पर इस पवित्र स्रोतस्विनी में मल एवम् अन्य प्रदूषणों को मिलाने का जो उपक्रम चल पड़ा,वह उत्तरोत्तर बढ़ता ही जा रहा है। यदि अभी भी सचेत होकर इसे प्रदूषणों से न बचाया गया तो जन जीवन, भारतीयता किंबहुना मानवता ही संकटग्रस्त हो जायेगी; अतएव गङ्गा पर गहराये इस सङ्कट से दुःखी होकर, गङ्गा की भक्ति से ओत-प्रोत सुकोमल हृदया कवयित्री की अन्तर्वेदना 'रक्षत-गङ्गाम्' महाकाव्य के रूप में प्रवाहित हुई है।

यह कृति प्रायशः महाकाव्य के लक्षणों को गतार्थ करती है। ग्यारह सर्गों के इस महाकाव्य में अनेक गेय छन्दों का मधुर समावेश है । सर्गान्त में भिन्न छन्द का उपन्यास किया गया है। नगर, समुद्र, शैल, ऋतु, सूर्योदय, चन्द्रोदय, जलक्रीड़ा, वन, आश्रम, विप्रलम्भ, विवाह, पुत्रोदय, संग्राम इत्यादि वर्ण्य विषयों का चित्रण है। काव्य की नायिका दिव्य प्रकृति जगत्तारिणी गङ्गा हैं, जिनके आधिदैविक, आधिभौतिक एवम् आध्यात्मिक स्वरूप का चित्रण क्रमशः पौराणिक, आधुनिक,भौगोलिक एवं आध्यात्मिक सर्गों में किया गया है।

रेखा में उद्भासित चित्रों की भाँति भावानुरूप कहीं वैदर्भी कहीं गौड़ी और कहीं पाञ्चाली रीतियों के प्रयोग से शब्दचित्र का उत्कीर्णन है। छोटे-छोटे सुमधुर

पदों के विन्यास से माधुर्य गुण, स्फुटार्थ होने से प्रसादगुण और प्रसंगानुकूल कहीं-कहीं ओजोगुण का सन्निवेश है। उपनागरिका, कहीं-कहीं परुषा तो कहीं-कहीं कोमला वृत्ति का प्रयोग है।

रसभाव समाहित-चेता कवयित्री ने इस काव्य में अनुप्रास, यमक, श्लेष, वक्रोक्ति, उपमा, रूपक, उत्प्रेक्षा, व्यतिरेक, अर्थान्तरन्यास आदि अहमहमिकया समागत अलङ्कारों से कविता कामिनी को अलङ्कृत किया है। उत्तम देवता गङ्गा विषयक रतिभाव ध्वनि अथवा दृष्टिभेद से भक्ति रस एवं शान्त रस काव्य में अङ्गी रूप से अवस्थित है। अन्य शृङ्गारादि रसों का अङ्ग रूप से यथायथ सन्निवेश है। प्रदूषण से द्रवित हृदया कवयित्री ने स्थान-स्थान पर करुण रस की मार्मिक अभिव्यक्ति की है। इस प्रकार नाना रसभाव समुज्जवल यह कृति महाकाव्य के रूप को प्रस्तुत करती है।

वैदिक छन्द अनुष्टुप् में यह महाकाव्य वाग्देवता एवम् अन्य इष्टदेवों के नमस्कारात्मक मंगल से प्रारम्भ होता है। अनन्तर विविध वृत्तपुष्पों में गुम्फित स्त्रग्विणी गङ्गा का मनोहारी चित्रण है। कवयित्री ने श्रीगङ्गा को सामान्य निर्झरिणी के रूप में नहीं,अपितु उस चेतन शक्ति के रूप में देखा है,जो भारतीय संस्कृति की मूल आधार है; भारत राष्ट्र की अमूल्य निधि है। इस प्रकार यह महाकाव्य गङ्गा परिशोधन पुरस्सर पर्यावरण चेतना की ओर लोकमानस को आकृष्ट करता है। पारम्परिक शास्त्रानुकूल वर्णना एवम् आधुनिक प्रगतिशील विचार धाराओं के गङ्गा-यमुनी समन्वय से समृद्ध यह काव्य राष्ट्रीय एकता एवम् अखण्डता तथा विश्वबन्धुत्व के कल्याणकारी सन्देश का संवाहक है। सम्पूर्ण विश्व के लिए साम्यवाद की प्रतीक गङ्गा का चित्रण करते हुए विश्व में व्याप्त विनाश लीला के भय के संकेत भी काव्य में सूक्ष्मरूप में विद्यमान हैं। मां गङ्गा के प्रति भक्ति संचार, प्रदूषणों का निराकरण एवं पर्यावरण रक्षा के लिए जन जागरण का आह्वान करती हुई कवयित्री अपने उद्देश्य में पूर्णतः सफल हुई है।

श्री गङ्गा के प्रति यह भावमयी अभिव्यक्ति कल्पान्तर स्थायिनी हो और स्वर्धुनी की अविरल धारा के समान कवयित्री के यश का विस्तार करे, यह शुभकामना है।

डॉ. वायुनन्दन पाण्डेय
*पूर्व उपाचार्य-साहित्य विभाग*
*सम्पूर्णानन्द संस्कृत विश्वविद्यालय,वाराणसी*

श्रीमती लीला शर्मा

संस्थापक-प्राचार्या
वसन्त कन्या महाविद्यालय
कमच्छा, वाराणसी- १०

प्रथम अध्यक्षा- स्वच्छ गङ्गा अभियान, वाराणसी

# आशीर्वाद

वसन्त कन्या महाविद्यालय की स्थापना शिक्षा जगत् की एक चिरस्मरणीय घटना है; क्योंकि इसकी स्थापना के समय शिक्षा के पुनर्गठन के साथ ही भारतीय संस्कृति के चिरन्तन आदर्शों को अक्षुण्ण रखने, सामाजिक मूल्यों की रक्षा के साथ छात्राओं की नैतिक, बौद्धिक, शारीरिक, आध्यात्मिक तथा सौन्दर्यग्राही शक्तियों के सन्तुलित विकास का महान् आदर्श था। इस आदर्श को अपनी छात्राओं एवं शिक्षिकाओं में पल्लवित होते देख 'वसन्त' सदैव गौरवान्वित होता रहा है। सतत साधना ही सफलता एवम् आत्मोत्कर्ष का सोपान है, इसी के द्वारा सच्चा ज्ञान प्राप्त हो सकता है। अध्यापिकाएं छात्राओं के हृदय में पवित्र ज्ञान की शाश्वत ज्योति प्रज्वलित करें- यही हमारा सङ्कल्प रहा है। इस सङ्कल्प को 'रक्षत गङ्गाम्' के रूप में साकार हुआ देख मुझे अपार हर्ष हो रहा है। मैं इस कृति की लेखिका डॉ. कमला पाण्डेय, अंग्रेजी भावानुवादिका डॉ. अनुराधा बैनर्जी, आवरण शिल्पी श्रीमती अञ्जना चैटर्जी तथा प्रकाशन सहयोगिनी कु० सरला पाण्डेय (संस्कृत आनर्स, स्नातक तृतीय वर्ष) को हार्दिक बधाई देती हूँ।

इस महाकाव्य की लेखिका जब बालिका के रूप में महाविद्यालय में प्रविष्ट हुयी, उसी समय मुझे उसके भविष्य का आभास हो गया था। वह दिनों दिन उन्नति के सोपान पर, पहले शिक्षा के क्षेत्र में तत्पश्चात् अध्यापिका के रूप में अग्रसर होती गयी। अपनी छात्राओं में अपने द्वारा अर्जित गुणों को कूट-कूट कर भरने में सतत प्रयत्नशील इस संस्कृत सेविका के बारे में सोचती हूँ तो कालिदास का यह श्लोक मेरे मानस पटल पर छा जाता है-

**क्व ईप्सितार्थंस्थिरनिश्चयं मनः पयश्च निम्नाभिमुखं प्रतीपयेत् ।**

गङ्गा आज प्रदूषण के भयानक दौर से गुजर रही है। उसकी रक्षा का सङ्कल्प भावी पीढ़ी को महाविनाश से बचाने के लिए अत्यन्त आवश्यक है। 'रक्षत गङ्गाम्' में कवयित्री ने इसी सामाजिक एवं सांस्कृतिक जागरण का आह्वान किया है।

मैं इस प्रयास की भूरि-भूरि प्रशंसा करती हूँ और इसकी सफलता के लिए गद्गद हृदय से आशीर्वाद देती हूँ।

सस्नेह आशीर्वाद सहित
लीला शर्मा
२६. २. ९९

(लीला शर्मा)
'कृष्ण-कुटी'
बी.२९/१९ संकट मोचन मार्ग
वाराणसी-५
दूरभाष : ३१००२६

दिनाङ्क : २६-२-९९

**R.C. SHARMA**
Professor, Indian Art
& Museology



**Director,**
Bharat Kala Bhavan,
Banaras Hindu University,
Varanasi - 221005
Tel. 0542-316337
Fax. 317074 (B.H.U.)

---

I was much delighted to go through the manuscript of *'Rakṣata Gaṅgāṁ'* composed by Dr. Kamla Pandey, Reader and Head of the Department of Sanskrit, Vasant Kanya Mahavidyalaya, Kamachha, Varanasi. The journey of the Holy River from its emergence to the union with portion touching a number of important places is highly enchanting and rhythmic. The beautiful description not only unfolds the religious and cultural significance of these places but also highlights the role of the *Gaṅgā* in furthering their grandeur. This spontaneous outburst of her sentiments in form of prayers and pains appreciate the sanctity of the most sacred river of the East and also suggest remedies for its maintenance and proper care. This is a burning problem of the modern environment and this book will undoubtedly help in eradicating the menace of pollution.

The bunch of lyric poems comprising more than 700 verses is of great merit from the literary point of view and it was a great pleasure to read and listen to their melodious recitation from Dr. Pandey. The Hindi translation by the poetess herself and its English rendering by her colleague Dr. Anuradha Banerjee has further enhanced the value of the work and it will certainly be admired by the masses paying homage to the River *Gaṅgā* and appreciating the beauty and great contribution to the Indian thought and culture. Dr. Pandey deserves best compliments and congratulations for successful completion of this marvellous work.

R. C. Sharma

16.5.98

(R.C. SHARMA)

---

**Res. A. 3, Principals' Colony, B.H.U., Varanasi- 221005, Tel. 0542-316291**

## Translator's note

The process of creativity is amazing. It silently etches out an opening because it can not remain muffled for ever. Teaching for a long time in class rooms loses its original excitement unless the mind of the teacher sets out to explore the ways to renew itself. Fortunately *'Sarjanā* became that platform for resuscitation. It has eventually offered a rare chance to the writer of *'Rakṣata Gaṅgāṁ'* to express her essential self and a nagging concern for *Gaṅgā*, the source of life for millions.

Translating the epic into English posed to be a challenge. The basic ideas in *Deva Vāṇī Sanskṛt* often resisted easy translation. The rich texture of Indian mythology recounting the minute movements of the divine river often left the translator vanquished in her modest effort. A verbatim translation of the text sometimes seemed to give a stilted flavour. So with the consent of the author the mode of free translation has been adopted, as it helps to render the essence of the epic in a more flexible way. Whatever, finally could be done is the result of the blessing of my *Guru* and the grace of *Gaṅgā*.

A glossary has been added for the readers who do not know the typical *Sanskṛt* expressions.

The writer and the translator feel overwhelmingly indebted to Dr. Aruna Mukhopadhyaya, who despite her fragile health took great pains to prepare the glossary and go through the translation minutely.

***Anuradha Banerjee***

***25th March, 1999***
***Sheesh Mahal***
***Varanasi***

# अनुक्रमः


नमनम् ........................................................ (i)
निवेदनम् ........................................................ (iii)
मङ्गलाचरणम् ........................................................ १

**उत्पत्तिः**

प्रथमःसर्गः ..... पौराणिकमतम् ........................................ ७
द्वितीयःसर्गः ..... आधुनिकमतम् ........................................ ४२

**यात्रा**

तृतीयःसर्गः ..... हिमालय-देवप्रयागवर्णनम् ........................ ४९
चतुर्थः सर्गः ..... हृषीकेश-कर्णपुरवर्णनम् ........................ ७२
पञ्चमः सर्गः ..... तीर्थराजप्रयाग-विन्ध्यवर्णनम् ................. ८४
षष्ठः सर्गः ..... काशी (वाराणसी)-वर्णनम् ........................ ९९
सप्तमः सर्गः ....... विहारप्रदेश-वर्णनम् ........................ १४०
अष्टमः सर्गः ..... बङ्गभू-गङ्गासागर-वर्णनम् ..................... १६२

**अध्यात्मम्**

नवमः सर्गः ..... अध्यात्म-वर्णनम् ................................ १८९

**प्रदूषणम्**

दशमः सर्गः ..... प्रदूषण-वर्णनम् ................................ २०१

**निवारणम्**

एकादशः सर्गः .... निवारण-वर्णनम् ................................ २१५

**परिशिष्टम्**

# सङ्केत सूची

१.--------वृ. ना. पु. ........................................... वृहन्नारदीय पुराण
२.--------ब्रह्मं वै. पु. ........................................... ब्रह्मवैवर्तपुराण
३.--------ब्र. पु. ........................................... ब्रह्माण्ड पुराण
४.--------प. पु ........................................... पद्म पुराण
५.--------स्क. पु. ........................................... स्कन्द पुराण
६.--------पञ्च क्रो.परि. ........................................... पञ्चक्रोशी परिक्रमा
७.--------का.र. ........................................... काशी रहस्य
८.--------वारा. वै ........................................... वाराणसी वैभव
९.--------वा. रा. ........................................... वाल्मीकि रामायण
१०.--------दु. स. ........................................... दुर्गा सप्तशती
११.--------कु. सं. ........................................... कुमार सम्भवम्
१२.--------मेघ. ........................................... मेघदूतम्
१३.--------अभि. शा. ........................................... अभिज्ञान शाकुन्तलम्
१४.--------श. कल्प. ........................................... शब्द कल्पद्रुम
१५.--------अ. को. ........................................... अमर कोश
१६.--------गंगा ल. ........................................... गंगालहरी
१७.--------देवी भाग. ........................................... देवी भागवत
१८.--------श्रीमद् भा. ........................................... श्रीमद्भागवत
१९.--------महाभा. ........................................... महाभारत
२०.--------ऋग् ........................................... ऋग्वेद
२१.--------गंङ्गो.मा. ........................................... गंङ्गोत्तरी माहात्म्य
२२.--------उ. यात्रा. ........................................... उत्तराखण्ड यात्रा
२३.--------कल्या.ती. ........................................... कल्याण तीर्थाङ्क
२४.--------कल्या.ना.पु. ........................................... कल्याण नारद पुराणाङ्क
२५.--------कल्या.श. ........................................... कल्याण शक्त्यङ्क
२६.--------कल्या.भ. ........................................... कल्याण भक्ताङ्क
२७.--------शं. दि. ........................................... शंकर दिग्विजय
२८.--------का. इति. ........................................... काशी का इतिहास
२९.--------अ. ........................................... अध्याय
३०.--------श्लो. ........................................... श्लोक
३१.--------स्क ........................................... स्कन्ध



श्रीमती पञ्चाननी देवी

**मातरं सानुमत्पुत्रीं सुकृतारण्यचारिणीम् ।**
**नमस्कृत्यानुरागेण कृतिं तस्यै समर्पये ।।**

# नमनम्

श्रीगङ्गाया गौरवं, स्वच्छं स्वरूपं माहात्म्यं, सम्प्रति च तस्यामहर्निशं विधीयमानं प्रदूषणं--इत्येतदुभयमवलोक्य समुद्भूता अन्तर्वेदना काव्यकलेवरमा-वहन्ती 'रक्षत गङ्गाम्' इत्युद्गाररूपेण प्रस्फुटिता। एतत्काव्यरचनायै प्रेरणातरङ्गप्रेषिकाम् अमृततोय-तरङ्गिणीं पराम्बां श्रीगङ्गामेव आदौ प्रणामाञ्जलिं समर्पये; तदनु अमिताऽऽशीर्भिः संवर्धयन्तीं मातरं पञ्चाननीदेवीं प्रणमामि। वैष्णवमहात्मनां बरेलीजनपदस्थ-तुलसीमठाधीश्वराणाम् अनन्तश्रीविभूषितानां केशवदासमहाराजानां शिष्या ममाग्रजा गुरुवर्याश्च श्रीस्वामिकमलनयनदासाः (श्रीकैलाशचन्द्रपाण्डेयाः) श्रद्धया प्रणम्यन्ते यैर्लक्ष्यस्यास्य सिद्धये मनसा वाचा कर्मणा सहयोगो विहितः।

एतस्मिन्नवसरे शास्त्रदृष्टिप्रदातार अस्मद्गुरुचरणाःप्राच्यापाच्यविधाविचार-चतुरा महामनीषिणो गोलोकवासिनः प्रो. सिद्धेश्वर भट्टाचार्यवर्याः, न्यायप्राचीन-भारतीय राजनीति शास्त्र-चूडामणयः पं. विश्वनाथ-शास्त्रिदातार-महोदयाः, मीमांसकप्रवराः पं. गजाननशास्त्रिमुसलगांवकर-महाभागाः,वैयाकरणाः पं.काशीनाथ पाण्डेयाः, प्रखरनैयायिकाः प्रो. कीर्त्यानन्द झा महोदयाश्च प्रणति पुरस्सरं सादरं स्मर्यन्ते।

यैस्तु काव्यकृतिरेषा आद्योपान्तं प्रसमीक्ष्य महाकाव्य कोटौ स्थापिता तेषां समालोचकमूर्धन्यानां साहित्यमनीषिणाम् अस्मद्गुरुवर्याणां डॉ. वायु-नन्दनपाण्डेयमहोदयानां कृते कृतज्ञता-ज्ञापनाय न समर्थानि मे वचांसि, तेषां चरणेषु ससम्मानं प्रणतिं निवेदये।

अस्य महाकाव्यस्य सफलतायै सनातन-धर्मध्वजधुरीणानां भारतीयसंस्कृति-संस्कृतोन्नायकानां देशोद्धाररतानां शारदा-ज्योतिष्पीठाधीश्वराणाम् अनन्तश्रीविभूषितानां पूज्यपादानां जगद्गुरुशङ्कराचार्याणां स्वामिस्वरूपानन्दसरस्वतीमहाराजानां शुभाशीर्वचोभिर्भृशमनुगृहीतास्मि, अतएव तत्रभवतां भवतां पादारविन्दयोः साष्टाङ्ग प्रणतिततिं समर्पये।

प्रख्यातपर्यावरणविद्भिः श्रीसुन्दरलाल-बहुगुणा-महोदयैरपि

अभिनन्दिताऽस्मि तावदाशीर्वचोभिः तान् प्रत्यपि हार्दिकीं कृतज्ञतां ज्ञापयामि। भारतकलाभवनस्य (काशीहिन्दूविश्वविद्यालयस्य) निदेशकैः प्रो.रमेशचन्द्रशर्ममहाभागैः स्नेहेन सभाजिताऽस्मि तान्प्रत्यपि भूयांसि नमांसि अर्पये। नमामि पं. वासुदेवद्विवेदिवर्याणां चरणयोश्च।

दीर्घकालं यावत् प्राचीन-नव्यन्याय-वेदान्तादिशास्त्राणाम् अध्ययने रतत्वात् शुष्के हृदये नवकवितालताविकासाय सरसरसधाराप्रवाहकाणां वसन्तकन्या-महाविद्यालयस्य सहयोगिनां संस्कृतमातृमण्डल-सर्जनासदस्यानां स्नेहपाशेन दृढमाबद्धाऽहं न पारये किमपि वक्तुम्; केवलं गद्गदहृदयेन प्रथमं बाल्यादेव सत्प्रेरिकानां सन्मार्गदर्शिकानां साकेतधामगतानां डॉ. सावित्री- श्रीवास्तवमहाभागानां पुण्यस्मरणं कुर्वे, वसन्तकलिकां विकसितामवलोक्य प्रहृष्यमाणामाद्यां प्राचार्यां श्रीमतीं लीलाशर्ममहाभागां सादरं प्रणमामि। मानसमुत्साहेन उल्लासयन्तीं प्राचार्याचरां मान्यामिन्दिरागुप्तमहोदयां, स्नेहमयीं वर्तमानप्राचार्यां डॉ. वीणा व्यासमहोदयाञ्च नमस्करोमि। काव्यसर्जनायाः प्रेरिकां कृतिञ्च आङ्ग्लभावानुवादेन विभूषयन्तीम् अनुरागवतीं डॉ. अनुराधा वन्द्योपाध्यायां तत्र साहाय्यं विदधतीं डॉ. अरुणामुखोपाध्यायां नमस्कुर्वन्ती ताभ्यः भूयशो धन्यवादान् वितरामि। शिष्यां सहयोगिनीं डॉ. शान्ता चट्टोपाध्यायां कनीयसीं पाण्डेयवंशजां डॉ. मीनाक्षीं पूर्णिमाञ्च प्रीत्याऽभिनन्दामि। शुभकामनाभिरानन्दयन्तीं डॉ. नन्दिनीं (वर्मा) स्नेहेन संवर्धयामि, आवरणालङ्करणकर्त्रीं श्रीमतीम् अञ्जनाचट्टोपाध्यायां सधन्यवादं सौहार्द्रेन सम्मानयामि।

ग्रन्थमिमं प्रकाशयन्तं श्रीमन्तम् उमाशङ्करपाण्डेयमहोदयं स्नेहेन सभाजयामि, संवर्धयामि चाशीर्भिः चिरायुष्मतीं सरलापाण्डेयां स्नेहपात्रां नन्दिनीञ्च स्नातकतृतीयवर्षीयां स्वकीयां शिष्याम्।

अन्ते च मानवसुलभभ्रमप्रमादवशाद् जातानां त्रुटीनां कृते विदुषां समक्षं क्षमां प्रार्थयन्ती पुण्यसलिलां निर्मलां कर्तुं प्रेरयेद् लोकमानसम् एष लघुप्रयास इति भगवन्तं विश्वेश्वरं सम्प्रार्थये।

कमला पाण्डेया

पञ्चामृतम्
बी१६/३८बी-१ पाण्डेय हवेली
वाराणसी-१०
दूरवाणी-३२९८३८,

# निवेदनम्

साम्प्रतिके युगेऽनुक्षणम् अतिशयेन प्रदूष्यमाणं पर्यावरणं न केवलं मानवसभ्यतायाः कृते चिन्ताया विषयः, अपितु सकलचराचरजीवजातस्य कृतेऽभिशापरूपम् । विश्वधरातले प्राकृतिकापदाभिः प्रतिक्षणं भयाक्रान्तः खलु मानवः। प्रकृतिं प्रति क्रियमाणम् अप्राकृतिकं व्यवहारं विलोक्य समुत्पत्स्यमानो विनाशोऽनुमीयते तावत् पर्यावरणतत्त्वविद्भिः[१]। ध्यानाकर्षणमपि विधीयते अन्ताराष्ट्रियस्तरेण समायोज्यमानेषु सम्मेलनेषु [२]। प्राच्यभारतीयै मनीषिभिरपि पर्यावरणचेतनायाः प्रतिबोधः क्वचित् साक्षात् क्वचिच्च प्रतीक माध्यमेन कृतः। उदात्तप्राकृतिकतत्त्वेषु देवत्वमादधानानां वैदिक ऋषीणां छन्दस्वती सभ्यताया मुकुलनेन सार्धमेव पर्यावरणचेतनाया दीपशिखां प्रज्वालितवती । तैः प्रकृतिर्जडरूपेण न विश्लेषिता अपितु जगत आधारभूता [३] चिच्छक्तिरूपेण प्रतिपादिता,[४] सर्वोच्चसत्तात्त्वेन समाराधिता [५], मातृभावेन च उपासिता [६]।

आधुनिकं भौतिकं विज्ञानन्तु प्रकृतिं जड इत्यभिमन्यते। अमूर्तेषु परमतत्त्वेषु अनास्थां प्रकटयति। अतएव प्रकृतिसन्दोहस्य सम्पूर्णा प्रक्रिया उपभोक्तृवादिभिः मूल्यैरभिप्रेरिता वर्तते। साम्प्रतं हि नूतनानां वैज्ञानिकचमत्काराणां चाकचिक्येन

---

१. पर्यावरण असन्तुलन : आज की ज्वलन्त समस्या - (आज ५-६-८३)।
पवित्र गङ्गा में भारी प्रदूषण से गङ्गा घाटी में बसी बीस करोड़
आवादी को खतरा - (आज ३-६-८३)।
Ecological threat from man- (Times of India 6-6-83.)

२. पृथ्वी सम्मेलन (५-६-९२)।

३. आधारभूता जगतस्त्वमेका-दु.स. ११/४।

४. ........ त्वं च परब्रह्मतत्त्वमेव। स्वयं प्रकाशमानमनतिशयानन्द चिद्रूपमसीत्यर्थः।
दु. स. ४/७ शान्तनु कृता व्याख्या।

५. द्रष्टव्यम् - ब्र.. वै. पु. प्रकृति खण्डे २/६६, ७-१०, वह्वृचोपनिषद् ।

६. या देवि सर्वभूतेषु मातृरूपेण संस्थिता। दु. स. ५/७१।

चमत्क्रियमाणानि केषां चक्षूंषि न भवन्ति? प्रतिदिनम् अभिनवम् उपभोगोपकरणम् अवाप्य को नु न प्रसीदतितराम् । सकलसौविध्यसङ्कुला विलासिनी जीवनशैली केषां मनांसि न हरति? किन्तु नूनं विज्ञानस्य अपरोऽपि विनाशपिशुनः पक्षो भस्मासुरायते। एकेनैव पारमाणविकास्त्रेण क्षणादेव मानवता भस्मसात् भवेत् । भूतलाङ्गणं लघुमन्यमानै रणधीरै इदानीं गगनार्णवौ अपि रणाङ्गणायेते। 'स्टारवार' सदृशैः युद्धकौशलैः सकलम् आन्तरिक्षं पर्यावरणं भृशं प्रदूष्यते; येन सूर्यमण्डलस्य ओजोन इति सुरक्षाकवचो विहन्यते। दुष्परिणामोऽयं - सूर्यस्य प्रखरमयूखाः साक्षाद् भूतले निपतन्ति, असाध्यान् चर्मरोगान् जनयन्ति। सार्वभौमिक ऊष्मा सामान्यं तापमतिशेते। अन्तरिक्षयुद्धयानानां धूमेन निखिलजीवजन्तूनां प्राणधारको वायुः (आक्सीजन) प्रदूष्यते।

प्राचीनैः प्रकृति-वैज्ञानिकैस्तु प्रकृतिं प्रति एतस्या उपभोग्योपभोक्तृभावापन्नदृष्टेः दुष्परिणामो देवासुरसङ्ग्रामप्रतीकेन प्रतिपादितः।[७] तेषां मते पर्यावरणप्रदूषणं मानवस्य अन्तर्जगति अङ्कुरितानाम् आसुरीप्रवृत्तीनां प्रतिफलम् ।[८] अशुद्धे सति अन्तःकरणे बाह्य प्रदूषणं स्वतो निरस्यति।[९]

गङ्गावतरण प्रतीकेनापि किमपि अपूर्वमुपदिष्टं किल प्राच्यप्रकृतिवैज्ञानिकैः। एकस्यैव राज्ञः सगरस्य जनप्रतिनिधिभूतस्य षष्टिसहस्त्रसंख्याका आत्मजा जनसंख्यायाः सीमानमुल्लङ्घयन्ति। तेन जनसंख्याविस्फोटरूपिणी समस्या उत्पद्यते। विकृतजीवन-पद्धत्या आचरणे व्यतिक्रमो भवत्येव। फलतः ते विकारप्रेरिताः राजपुत्राः प्रथमं तावल्लतागुल्मपादपादीन् छिन्दन्तः तपोवनस्य बाह्यं पर्यावरणं विक्षोभयन्ति।[१०] विनीतवेषेण प्रवेष्टव्यानि तपोवनानि[११] इति कालिदासोक्तदिशा आश्रमप्रवेशकाले विनयशीलेन भाव्यम् । अहङ्कारमूर्तयः तेऽविनयिनः परुषवचनेन असद्व्यवहारेण

---

७. द्रष्टव्यम् - कु. स. २ सर्गः, दु. स. (प्रथम-मध्यम-उत्तम चरित्रम् )
वा. रा. सुन्दरकाण्डे ५१/३४। देवी भागवतम् स्क. ५।

८. द्र. कु.सं. २ सर्गः ।

९. ववुः पुण्यास्तथा वाताः सुप्रभोऽभूद् दिवाकरः।
जज्वलुश्चाग्नयः शान्ताः शान्ता दिग्जनितस्वनाः।।
(दु. स. १०/३१ -३२)

१०. द्र. बृ.ना. पु. अ.७/२४ - ३३, ४७ - ५६।

११. अभि. शा. १ सर्गः।

च मुनेरन्तःप्रकृतिमपि उद्वेजयन्ति [१२] । परिणामतः कपिलान्तः- प्रकृतौ प्रादूर्भूता प्रतिक्रिया शापरूपेण परिणमते।[१३] एतस्यां विषमस्थितौ आधिभौतिकाधिदैविकाध्यात्मिकैतत्-त्रितयवैभवशालिनी सकलप्रदूषणनिवारिणी पर्यावरणचेतनायाः संवाहिका महानदी गङ्गा कथमवतरेदस्यां भारतभुवि-इति बहुविचारितं भगीरथेन तत्पूर्ववर्तिभिश्च भूपतिभिः। सा गङ्गा एव सर्वतो विशुद्धम् आन्तरिकं बाह्यं च पर्यावरणं संस्थाप्य आविद्यकान् कल्मषरूपान् विनाशबीजान् सगरात्मजान् समुद्धर्तुम् उन्मूलयितुं क्षमते।

ननु, कथं सामान्यरूपेण जलवाहिका नदी अन्तःप्रकृतिपरिशोधनपुरस्सरं बाह्यप्रकृतिं परिशोधयितुमर्हति-इति चेत्

न, श्रीगङ्गा न केवलं जलसंवाहिका अपितु त्रिविधाकारा शक्तिः। तथाहि-स्वकीयेन आध्यात्मिकवैभवेन सकलाज्ञाननिवारिणी अघौघसंहारिणी चिदानन्दासंविद्रूपिणी निराकारा स्वयंप्रकाशिनी। आधिदैविके नराकारा सती अवनितलेऽवतीर्य ' दैत्यतेजांसि हिनस्ति '। [१४] एषैव आधिभौतिके नीराकारा भवति। अतएव श्रीगङ्गा नामोच्चारणमात्रेण पवित्रीकृतहृदया, दर्शनेन पापापहारिणी, स्नानेन तापापहा, पानेन पुष्टितुष्टिदा, समाराधनेन च चतुवर्गफलप्रदा । अस्या इदं वैशिष्ट्यं सर्वविधां प्रकृतिं पर्यावरञ्च शोधने समर्थम् ।

अत्रेदमवधेयम् - गमयति प्रापयति ज्ञापयति वा भगवत्पदं या शक्तिः सा गङ्गा ।[१५]

आधिभौतिके इयमापोमयी शक्तिः तोयामृतेन तर्पयन्ती लोकम् आहिमालयात् सागरान्तं प्रवहन्ती जलधारारूपेण दृग्गोचरीभूता । हिमालयान्तर्गतस्य बदरिकाश्रमस्य उत्तरस्यां नारायणपर्वतस्य प्रान्तप्रदेशादुद्गता धारा विष्णुपदी अलकनन्देति स्मृता। एतस्या अपरा धारा गङ्गोत्तरी-हिमप्रवाहे नन्दन-मेरु-भृगुपथ-शिवलिङ्गयादि शिखरेषु अन्तःसलिला सती आविर्भवति गोमुखात् । सा च भागीरथीति कथ्यते। अपरा मन्दाकिनी केदारक्षेत्रे विद्यमानाद् हैमप्रवाहाद् उद्गता सती पर्वतीयान् प्रदेशानभिषिञ्चती

---

१२. वृ. ना. पु. अ. ८ १-६ ।

१३. इत्युक्तो कपिलः क्रुद्धो नेत्राभ्यां ससृजेऽनलम् ।
स वह्निः सगरान्सर्वान् भस्मसादकरोत् क्षणात् ।।
(वृ. ना. पु. ८/७ )

१४. दु. स. ११/२७ ।

१५. शब्दकल्पद्रुमे गङ्गापदस्य व्युत्पत्तिः।

रुद्रप्रयागे भागीरथीं मिलति। कूर्माञ्चलसीमातः समुद्भूता पिण्डारका कर्णप्रयागे अनयोः सम्मिलति। एवं हिमाद्रेः भिन्न-भिन्नप्रदेशादुद्गत्य कलकलध्वनि - ध्वनितदिगन्तराः नैका निर्झरिण्यः परस्परं सम्भिदन्त्यः सन्देशमेकताया अखण्डतायाः समाहरन्त्य इव प्रतीयन्ते। भागीरथी अलकनन्दया सह सुप्रसिद्धे रमणीये देवप्रयागे मिलित्वा प्रसीदतितमाम्। ततः सर्वाः सम्मिश्रिताः सरितो गङ्गा-पदं भजन्त्यः पर्वतप्रदेशानतिक्रम्य समतले समागच्छन्ति। तीर्थराजे तु गङ्गा-यमुना-सरस्वतीनां सङ्गमो भवति। अत्र 'यमयति विरमति गङ्गायाम् [१६]' इति व्युत्पत्त्या यमुनाऽपि गङ्गा भवति। सर्वासां नदीनां संघभूता गङ्गा भगवन्तं समुद्रशायिनं नारायणं, नाराणाम् अपामयनं नारायणं समुद्रं वा सङ्गन्तुं सततं गतिशीला। एतासां सर्वासां नदीनां गतिशीलता गङ्गा-पद-वाच्या शक्तिः।

आधिदैविके तु विष्णोः चरणारविन्दसमुद्भूता चरणाऽमृतरूपा तावद् विष्णुपदी गङ्गा। अस्याः प्राकट्यमधिकृत्य विविधाः किल कथाः श्रूयन्ते पुराणेषु। तथाहि- अनुपमसौन्दर्यशाली वनमाली रासेश्वरः शरच्चन्द्रज्योत्स्नाच्छुरितायां राकायां यदा गोपिकाभिः सह रममाणः आसीत्, निरतिशयप्रेममयत्वात् तदा द्रवरूपेण परिणतः, एष ब्रह्मद्रवः श्रीकृष्णस्य परंब्रह्मस्वरूपत्वात्। निराकारसत्तायां सच्चिदानन्दात्मकोऽसौ साकारसत्तायां प्रेमरूपेण स्फुरितः सन् गङ्गारूपेण प्रवाहितः।[१७] भगवतः इयं प्रेमाशक्तिः तं गमयति, प्रापयति ज्ञापयति वा; अतएव गङ्गेति अभिधीयते। किञ्च- वामनावतारे हरिणा पादत्रयेण त्रिलोकी मिता। अन्तरिक्षे पादप्रक्षेपणे सति अङ्गुष्ठनखेन विवरोऽभूत्; ततः समुज्ज्वला गाङ्गधारा समुद्गता [१८]। सैषा तमसः परस्ताद् आदित्यज्योतिः प्रस्फुरिता सती आकाशगङ्गेति विज्ञायते। अपि च - महर्षेः कपिलस्य शापेन भस्मीभूताः खलु सगरात्मजाः। तेषां तर्पणाय गङ्गाया भूलोकेऽवतरणं परवर्तिभिः वंशजैराकाङ्क्षितम्। कृतभूरिपरिश्रमो भगीरथः सफलो बभूव किल स्वपूर्वजानां सगरात्मजानां तर्पणव्याजेन वसुधातले आनेतुमिमां प्राणधारां प्राणिजातस्य।[१९]जीवनस्य आधारभूता एषा सुधामयी तोयतरङ्गिणी पुरुषार्थत्रयं सम्पादयन्ती अन्ते स्वर्गं मुक्तिञ्च प्रददातीति सार्थक्यनामा गङ्गेति।

आध्यात्मिके च परं ब्रह्म गमयतीति योगात् चिदानन्दा संविद् गङ्गा-पदवाच्या[२०]।

---

१६. शब्दकल्पद्रुमे यमुनापदस्य व्युत्पत्तिः।

१७. द्र. ब्र.वै. पु. प्रकृति खण्डः।

१८. श्रीमद्भा. ५/अ. १७।

१९. वा. रा. अयो. ४३सर्गः।

इदमत्र ध्येयम् - अध्यात्मयोगे ध्यानप्रक्रियायां विषयीभूतं तत्त्वं यदा शब्दार्थौ अतिक्रम्य बिम्बग्राहकं भवति तदाऽतिनिगूढं तत्त्वं प्रतीकेषु बीजाक्षरेषु च निगूहन्ति तत्त्ववेत्तारः । गङ्गावतरणमपि आख्यानच्छलेन कमपि अपूर्वं दिव्यं लोकोत्तरं च तत्त्वं प्रतीकमाध्यमेन प्रतिपादयति। तथाहि -अखिलब्रह्माण्डस्य अधिष्ठानचैतन्यं तावद् विष्णुः =विशुद्धं व्यापनशीलं निरवच्छिन्नं च ब्रह्म। तदेव यदा द्रवरूपेण परिणमते तदा गङ्गेति उच्यते ।[२१] एष एव विष्णुः सावच्छिन्नः सन् ज्ञानेच्छा-क्रियात्मकाभिः तिसृभिर् गतिभिः त्रैलोक्यं व्याप्नोति।[२२] तस्य चिन्मयचरणेषु सञ्चरिता ऋतम्भरा पीयूषधारा चितिर्गङ्गेति गीयते[२३]।

एषा चिन्मयी आलोकधारा पृथिव्यन्तरिक्षपातालेषु, दैहिक-दैविक-भौतिकाऽवस्थासु, जाग्रत-स्वप्न - सुषुप्तिषु, मनोबुद्धयहंकारेषु, सत्य- शिव - सुन्दरेषु, इडा-पिङ्गला - सुषुम्णासु, सत्त्व-रजः - तमस्सु, पश्यन्ती - मध्यमा-वैखरीषु, सर्वेषु त्रियोगेषु ओता च प्रोता च; अतएव त्रिपथगेति उच्यते।[२४]

एषा विष्णुपादोदका विष्णुपदी, धातुः कमण्डलौ स्थिता ब्रह्मद्रवी, शिवजटासु

---

२०. यथोक्तं जगन्नाथेन गङ्गालहर्याम् -' न साक्षात्वेदैः .....' इत्यादिना श्लोके। अयमर्थः- हे सुरतटिनि! देवधुनि! यद् = ब्रह्म, गलितभेदै = अद्वैतप्रतिपादकैः 'नेह नानाऽस्ति किञ्चन' इत्यादि ब्रह्मरूपैः, साक्षाद् वेदैः = प्रत्यक्षश्रुतिभिरपि, न अवसितम् = इयत्तया न निश्चितम् । यस्मिन् ब्रह्मणि जीवानां = व्यासादिविद्वत्-प्राणिनां, मनोवागवसरः = मनोवचोव्यापारः, न प्रसरति ' यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' इत्यादि श्रुतेः। निराकारम् = अशरीरं, नित्यम् =उत्पत्त्यादिशून्यं, निजमहिमनिर्वासिततमः =स्वमाहात्म्येन निर्वासितं = नाशितं तमो येन तत् स्वप्रकाशं ' यस्य भासा सर्वमिदं विभाति' इति श्रुतेः। विशुद्धं = मायामलरहितं, तत्त्वं = निखिलजगत्कारणत्वेन प्रसिद्धं ब्रह्मत्वं त्वमेव असि, न विषयः = त्वमितरविषयभूता नासीत्यर्थः । - पीयूषलहरी व्याख्या श्लो. १०। नारायण तीर्थसरस्वतीभिरपि 'चिदात्मैका नित्या चितिसुख सदाऽऽविष्कृतिरसि ' इत्यादि श्लोकेन गङ्गैव अद्वितीय ब्रह्म इत्युक्तम् । - पीयूषलहर्यामुद्धृतः ।

२१. योऽसौ सर्वगतो विष्णुः चित्स्वरूपी जनार्दनः।
स एवं द्रवरूपेण गङ्गाम्भो नाऽत्र संशयः ।। बृह. ना. पु. ४/२२।

२२. विचक्रमाणः त्रेधोरुगायः । ऋग्. १. १५४. १ ।
यस्य उरुषु त्रिषु विक्रमणेषु ।
अधिक्षियन्ति भुवनानि विश्वा ।। ऋग्. १. १५४. २ ।

२३. विष्णोः पदे परमे मध्व उत्सः । ऋग्. १.१५४.५ ।

२४. गङ्गा - चिन्मय आलोक की नदी - डॉ. रमा कान्त पाण्डेय - सन्मार्ग-गङ्गाविशेषाङ्कः।

च अवतरिता जटाशङ्करीति ज्ञायते। अयमभिप्रायः-दिक्कालाद्यनवच्छिन्नस्य व्यापनशीलस्य ब्रह्मणः =विष्णोः सोपाधित्वं नाम ब्रह्मकमण्डलुत्वम् ।उपाधिपरिच्छेदेन सङ्गोलितं चैतन्यम् अण्डाकृतिं भजते। प्रकाशमयत्वात् स्वर्णाभोऽसौ हिरण्यगर्भपदेन प्रसिद्धः । तत्र परमविन्दुस्वरूपिणी गङ्गा विराजतेतमाम् । तां ब्रह्मकमण्डलुवर्तिनीं चैतन्यवारिधारां भुवस्तलेऽवतारयितुं महत्तप आवश्यकम् । तपोविग्रहो भगीरथः विश्वासे शिवेऽवतारयति इमाम् ऋतम्भराम् । विश्वासेऽवतरिता चैतन्यसलिला गङ्गा अहङ्कारविग्रहान् अविद्याग्रस्तान् जीवान् सगरात्मजान् उद्धर्तुं क्षमते। [२५]

यद्वा, 'नारा = आपोऽयनमस्य '[२६] इति व्युत्पत्या सूर्य मण्डले देदीप्यमानो देवो नारायणः । तस्य गगनव्यापिनी प्रभा गङ्गेति गीयते, गं = गच्छतीति निर्वचनात्[२७]। सूर्यस्य भगं = तेजः ईरयति योऽसौ भगीरथः प्रेरकः तस्य आन्तरिकीं शक्तिं त्रिलोक्यां प्रसारयति।

यद्वा, सूर्यमण्डलमध्यवर्ती नारायणः [२८] = व्यापनशीलं ब्रह्म तस्य ब्राह्मी चितिः सूर्यप्रभा आकाशगङ्गेति ज्ञायते ।

अपि च - पश्यन्ती - मध्यमा- वैखरीषु सञ्चरणशीला परा वाग् गङ्गा पदवाच्या। ऋग्यजुःसामसु अविच्छिन्नप्रवाहा एषा छन्दस्वती अनाद्यनन्ता शब्दब्रह्मस्वरूपा । [२९]

हा हन्त! अस्मिन्नघौघसङ्कुले कलौ ईदृशी विलक्षणा जीवनदायिनी प्राणधारा, भारतीय संस्कृति संवाहिका साम्प्रतं सर्वतोभावेन प्रकृष्टं दूष्यते। अमृततोय संवाहिनीं लोकमानसपावनीं स्वकीयां मातरं मलेन तिरस्कुर्वन्ति, दोषसमूहेन जर्जरीकुर्वन्ति तस्या एव पुत्राः । आधुनिक-जड़वादिसभ्यतायां पुनः -पुनः आसुरी प्रवृत्तयः वरीवृध्यन्ते। दुष्परिणामोऽयं भगीरथरथखातावच्छिन्न-प्रवाहा गङ्गा बन्धेषु प्रणालिकासु आबध्यते। व्यापारपोतानां रासायनिकद्रवैः तस्याः तोयाऽमृतं विषं विधीयते। उद्योगप्रधाननागरीसभ्यतायाश्च सकलं प्रदूषणजातं तत्तटेषु प्रक्षिप्यते। तस्या परात्वं देवत्वं अमृतत्त्वञ्च विस्मृत्य तामुपभोग्यात्वेन अभिमन्यन्ते आधुनिकाः साक्षराः

---

२५. तदेव।

२६. अमरकोश १.१.१८।

२७. सङ्गमाद् गमनाद् गङ्गा लोके देवी विभाव्यते-देवी भा. पु. ४५ अ.।

२८. ध्येयः सदा सवितृ-मण्डल ध्यवर्ती नारायणः सरसिजासनसन्निविष्टः ।

२९. गङ्गावतरण की दार्शनिक व्याख्या - डॉ. राममूर्ति त्रिपाठी- सन्मार्ग-गङ्गाविशेषाङ्कः।

राक्षसा मानवाः । एतस्या आसुरीप्रवृत्तेः कुफलं मानवेनैव उपभोक्ष्यते। प्रदूषितेष्वपि पञ्चभूतेषु परासंविद्रूपिणी भगवती गङ्गा कदापि न विनङ्क्ष्यति। किन्तु मानवस्तु स्वकृतस्य पापपुञ्जस्य फलभोक्ता नूनं भविष्यति। पर्यावरणसन्तुलनस्य केन्द्ररूपो धवलगिरिमालाभिः समाच्छादितः शैलाधिराज उत्तरस्यां दिशि राष्ट्रप्रहरीरूपेण सुशोभते, किन्तु आधुनिकविकासवादिभिर् हिमालयं प्रति यद् वैनाशिकमाचरणं विधीयते , तस्य निदर्शनं पर्यावरणविदः श्रीसुन्दरलालबहुगुणामहोदयस्य वचनेषु द्रष्टुं शक्यते- The Himalaya is bleeding today on account of the onslaught of agressive developement. ------The Tehari dam is being constructed inspite of the scientist's warnings about the danger inherent in its construction [30]

हिमालयोद्‌गता निर्मलापगा वन्यसम्पत्तयश्च राष्ट्रं सञ्जीवयन्ति । किन्तु साम्प्रतं क्रियमाणेन भोगलिप्सामयेन विकासेन हिमवाहा यथा विनश्यन्ते, तेन सर्वासां नदीनां शुष्कता समापद्येत -One more threat to the Himalayan rivers is from the continuous recession of glaciers which has accelerated during recent years. ------- with recession of this glacier, a disert is spreading north wards [31]

श्री गङ्गायाः सङ्कटः सभ्यतायाः सङ्कटोऽस्ति। यतो हि एषा भारतीयसभ्यतायाः संस्कृतेश्च सन्देशामृतं सततं प्रवाहयति अस्माकं हृदयेषु। गङ्गा सङ्कटापन्ना भवेच्चेत् जीवनं सुखमयं कथं भवेत् । अतएव समुपागतोऽयं कालो भारतीयानां पुनर्जागरणस्य। अधिकाधिकानि धनानि अर्जयितुं नैव विस्मरणीयोऽयं सिद्धान्तः - Ecology is permanent economy. इति। स्मरणीयं तावद् भगीरथतपः , स्मरणीयं च महामनसां मालवीयमहाभागानां मतम् – भगीरथ–रथखातावच्छिन्नः प्रवाहो बन्धरहितो भवेदिति।

ज्ञान–विज्ञान–प्रज्ञानानां मणिकाञ्चन संयोगेन एव मानवकल्याणं भवितुमर्हति, प्रकृतिं जडत्वेन अभिमन्यमानं भौतिकं विज्ञानं स्वीयैः सहोत्पादविभूतिभिः विमोहितं सत् परमं सत्यं विस्मरति । एतद् विज्ञानं प्रज्ञानेन सह संवालितो भवेत् चेत् चतुर्वर्गफलावाप्तिर्भवेत् ।

तदेवम् एतस्मिन्नतिविषमे सङ्कटाऽऽपन्नेऽवसरे श्रीगङ्गायाः स्वरूपप्रतिपादकानि

---

३०. The Himalayan threat- Sundar Lal Bahuguṇā.

३१. Ibid.

माहात्म्यप्रतिपादकानि च वचांसि मनसि अवधार्य तस्याः स्वच्छीकरणाय चिन्तनीयं प्रयतनीयञ्च दिवानिशम् । अस्यां हि पर्यावरण प्रशोधिकायाम् अभ्युदयनिःश्रेयसोः सम्पादिकायां लोकमातरि दोषजातानां वर्जने सति मानवसभ्यतायाः कल्याणं भवेत्। एतदन्तश्चिन्तनं 'रक्षत गङ्गाम्' काव्यकृतेः बीजं यमुरी कृत्य उत्पत्ति–यात्राऽध्यात्म–प्रदूषण–निवारण–प्रकरणेषु संविभक्तं तावदेकादशसर्गात्मकं महाकाव्यमिदम् । अत्र हि श्रीगङ्गायाः पौराणिकाधुनिक–भौगोलिकाध्यात्मिकस्वरूपनिरूपणं, तदनु साम्प्रतं क्रियमाणं दौर्भाग्यपूर्णं प्रदूषणं तन्निराकरणाय विचारणञ्च निरूपितं यथामति। निखिलानां नदीनां प्रतिनिधिभूताया गङ्गाया रक्षणम् अस्माकं जीवनस्य कृतेऽपरिहार्यम् इति मूलमन्त्रस्य गुञ्जनं लोकमानसे भूयात् । भारतीयानामास्थायाः केन्द्रीभूताया अस्याः स्वच्छीकरणाय कृतसङ्कल्पेन भाव्यं प्रत्येकं जनेन–इति शुभाकाङ्क्षया कृतिरियं लोकाय अर्प्यते ।

कमला पाण्डेया

रामनवमी २०५६ वैक्रमाब्दः



श्री श्री १०८ स्वामी कमलनयनदासः

वैष्णवी-गुणगानाय वैष्णवेन महात्मना।
दीक्षिता येन तं वन्दे स्वाग्रजं ब्रह्मचारिणम् ।।

अमृताम्बुमयीं गङ्गां दर्शं-दर्शं प्रदूषिताम् ।
मर्मान्तिवेदनोद्भूतः शोकः श्लोकत्वमागतः ।।

।।श्रीः।।
।। ॐ नमो गङ्गादेव्यै ।।
।। ॐ गं गणपतये नमः।।

वाणीं वीणाधरां वन्दे वरदां बोधरूपिणीम् ।
काव्यसारमयीं शुद्धां छन्दोऽलङ्कारभूषिताम् ।।१।।
बुद्ध्यधिष्ठातृदेवञ्च वक्रतुण्डं विनायकम् ।
नमामि विघ्नहर्तारं गौरीपुत्रं गणाधिपम् ।।२।।
ज्ञानदं शङ्करं वन्दे परमं शाश्वतं गुरुम् ।
हनूमन्तं कृपाशीलं धीमन्तं भक्तवत्सलम् ।।३।।
संसारोच्छेदिकां देवीं मोहासुरविमर्दिनीम् ।
श्रद्धया नौमि कल्याणीं ब्रह्मविद्यां पराम्बिकाम् ।।४।।

काव्य के सारभूत तत्त्व रस से युक्त एवं छन्द तथा अलङ्कार से विभूषित विद्या की अधिष्ठात्री वरप्रदात्री वीणाधारिणी ज्ञान स्वरूपा भगवती वाणी (सरस्वती) को नमस्कार है। बुद्धि के अधिष्ठातृ देवता, विघ्नहर्ता गौरीपुत्र गणपति को नमस्कार है। परमशाश्वत आदिगुरु शङ्कर तथा कृपाशील भक्तवत्सल हनुमन्त लालजी महाराज को नमस्कार है। संसार का उच्छेद करने वाली, मोहरूपी असुर का मर्दन करने वाली कल्याणमयी परा अम्बा ब्रह्मविद्या को नमस्कार है।।१-४।।

I revere the goddess of learning,who holds *Vīṇā* in her blissful hands and who is the essence of poetry, ornamented by rhetoric and prosody. I bow to *Gaṇapati*-the god of intellect, the son of *Gaurī* and the remover of all obstacles. I greet the perennial preacher, Lord *Śaṅkar* and *Hanumān*. I adore the ultimate reality, that is *Brahmavidyā*, which eradicates all worldly attachments and releases one from the cycle of life and death.(1-4)

शास्त्रद्वारं ययोद्घाट्य मोक्षद्वारमनावृतम् ।
शिक्षादीक्षोभयोपेतां वन्दे गुरुपरम्पराम् ।।५।।
पाषाणमङ्कुरीकृत्य सिञ्चन्तीं स्नेहधारया ।
वत्सलां जननीं वन्दे पञ्चाननीति संज्ञिताम् ।।६।।
अम्बरादाशिषां ज्योतिर्विकिरन्तं दिवि स्थितम् ।
नीलाम्बरं स्वपितरं प्रणमामि पुनः पुनः ।।७।।

* * * * *

सीतारामकृपाभिषेकविमलां तन्वीं मतिं कोमलाम्
आदाय प्रयते प्रगातुममितं गङ्गायशो निर्मलम् ।

शास्त्रद्वार को खोलकर मोक्षद्वार का उद्घाटन करने वाली शिक्षा और दीक्षा–दोनों प्रकार की गुरुपरम्परा को प्रणाम है। पाषाण के समान जड़ मेरे हृदय में ज्ञानबीज को अङ्कुरित कर निरन्तर स्नेह धारा से सींचने वाली वात्सल्यमयी जननी पञ्चाननी देवी को नमस्कार है। आकाश से आशीर्वाद के प्रकाश को फैलाते हुए स्वर्ग में स्थित पिता श्री नीलाम्बर दत्त पाण्डेय को मैं बार बार प्रणाम करती हूँ ।।५–७।।

सीता और राम के कृपारूपी जल से स्नात होकर विमल हुई अल्प बुद्धि से मैं गङ्गा के अमित यश का गान करने के लिए प्रवृत्त हुई हूँ। हे माता गङ्गे ! तुम्हारे जल से आकृष्ट चित्त वाली अत्यन्त भावाकुल मैं जो तोतली शिशुवाणी बोल रही हूं,

I pay homage to both traditions of teachers, those who have propagated education and those who have given the spiritual initiation leading to salvation. Again I bow gratefully to my beloved mother Smt. Panchanani Devi, who nourished the roots of my creative leaning with her immense love and patience and today the sapling is eager to blossom in its own limited capacity. My salutations are to my father Nīlamber Dutta Pandey; the rays of whose blessings are bestowed upon me from his heavenly abode.[5-7]

The grace of Lord *Rāma* and *Sīta* has so kindled the dorment sense of creativity in me that my humble self seeks to sing the glory of the celestial river *Gaṅgā* in its meek and modest way. O Mother *Gaṅgā*, seeing your holy water I am so overwhelmed that I try to render my feelings into these verses! Due to your

मातः! तेऽम्बुसमाहृतैकहृदया भावाञ्चिता भूरिशः
तुभ्यं देवि! समर्पयामि सहजां वाणीं मृदुं शैशवीम् ।।८।।
यद्यप्यम्ब ! गभीरता तव तनोः प्राज्ञैर्न विज्ञायते
वेदान्तादिनयेप्यवेद्यमिति ते तत्त्वं समाकर्ण्यते ।
चञ्चत्तोयतरङ्गयाऽऽर्द्रहृदये सम्प्रेषितं यत्त्वया
तत्तुभ्यं करुणालयेऽनुकवनं प्रत्यर्पये सादरम् ।।९।।
यद्यप्यम्ब ! गभीरकाव्यकृतिषु स्तोत्रप्रबन्धेष्वपि
प्रीत्या ते महिमा त्रिलोकविशदः सङ्गीयते कोविदैः।
किन्त्वद्य प्रचुरप्रदूषणहतां दृष्ट्वाऽऽर्तनादः स्वतो
'गङ्गां रक्षत-रक्षते' ति वचनैरुद्गीर्यतेऽन्तःस्थितः ।।१०।।

उसे तुम्हें ही अर्पित करती हूँ। हे अम्ब ! तुम्हारी गम्भीरता को बड़े-बड़े ज्ञानी-ध्यानी नहीं जान पाते। वेद-वेदान्त में तुम्हारे रहस्य को अवेद्य बतलाया गया है। किन्तु मेरा हृदय तुम्हारे चञ्चल जलतरङ्गों से आप्यायित हो जो कुछ कह रहा है, उसे मैं तुम्हें ही सादर अर्पित करती हूं। हे अम्ब ! यद्यपि तुम्हारी महिमा का गान वेद-पुराणों में बारम्बार हुआ है। शङ्कराचार्य, जगन्नाथ जैसे सारस्वत कवियों ने तुम्हारी प्रचुर स्तुति की है, किन्तु आज तुम्हें अत्यधिक प्रदूषण से विनष्ट होता देख, मेरे अन्तस् में जो आर्तनाद हो रहा है वह 'गङ्गा की रक्षा करो-रक्षा करो'- इन वचनों से स्वतः फूट पड़ा है ।।८-१०।।

kind inspiration a spring of poetry has opened up inside me and I offer my innocent utterings into these lyrical chants!O Mother, although your reality could not be encompassed by learned and wise scholars, while *Vedānta* says that your mystic Self is inaccessible, yet your twinkling spray of water provokes this ignorant narrator to relate your delightful glory to the millions of mortals. O merciful Mother, I convey my reverence in these hymns. Galaxy of celeberated poets from time immemorial have sung for your pure life-giving stream, still your anguished cry emanating out of pollution is yet to receive attention. My entire existence is shaken by the state of ruin which has been inflicted on you and hence, a cry to " *Save Gaṅgā* " impels me to write instinctively.[8-10]

आविर्भावकथामघौघशमनीं ब्रह्मद्रवि! प्राञ्जलां
शास्त्रोक्तं रुचिरञ्च तेऽवतरणं श्रेयस्करं वर्णये ।
यात्रास्तेऽनुपमा हिमालयनगादासागरं चित्रिता
अध्यात्मं परिकीर्तितुं परमणुं गूढं कथं पारये! ।।११।।
पैशाचीं विकृतां प्रवृत्तिमशुचिं सन्दृश्यमानां नृणां
क्रूराणां दुरितं वदानि किमु हा! सर्वं जुगुप्साकरम् ।
अस्मात् पापसमुच्चयादनुदिनं प्रक्षीयमाणां समै-
रस्माभिः परिचिन्तनीयमवितुं नूनं परं श्रेयसे ।।१२।।

हे ब्रह्मद्रवि ! तुम्हारी रक्षा की इस करुण पुकार के क्रम में सर्वप्रथम पुराणों में उल्लिखित आर्विभाव कथाओं का काव्यात्मक चित्रण है। तत्पश्चात् तुम्हारी अवतरण कथाओं का चित्रण है। यात्रा प्रकरण में तुम्हारी हिमालय से गङ्गा-सागर तक की अनुपम यात्रा का वर्णन है। तुम्हारे अत्यन्त सूक्ष्म अध्यात्मतत्त्व का निरूपण करने में समर्थ मैं भला कैसे हो सकती हूँ! मनुष्यों की पदे-पदे दिखाई देने वाली जुगुप्सा उत्पन्न करने वाली उस पैशाची प्रवृत्ति के बारे में क्या कहूं माँ ! जो तुम्हें निरन्तर प्रदूषणों से बोझिल बना रही है। इस पाप समूह से निरन्तर क्षीण होती हुई गङ्गा को बचाने का प्रयास हम सभी मानवों को मिल कर करना होगा, तभी हमारा कल्याण सम्भव है।।११-१२।।

Drawing on the sublime heritage of the holy *Purāṇas*, at the outset, the prime outburst of my chants toils to delineate your divine manifestation and then it rolls on to give voice to your mystical descent and finally it strives to recount your time-honoured journey from the *Himalaya* to *Gaṅgā-Sāgar*. It was an uphill task for my meek capacity to comprehend and reflect on your inexplicable spiritual magnanimity, but even then I felt goaded to get a glimpse of your reality, It was an awesome venture far above my potential. The inherent cruelty and the faithlessness of the degraded modern man have graudually eroded the sap of your life and imparted an anguished look to you. This awareness makes me raise a voice of protest and find a wayout of the terrible pollution inflicted on you.[11-12]

गङ्गारक्षणमेव भारतभुवः संरक्षणं शाश्वतं
गङ्गारक्षणमेव जीवजगतोः सञ्जीवनं सुन्दरम् !
गङ्गारक्षणमेव विष्णुभजनं स्वर्गापवर्गप्रदं
गङ्गारक्षणमेव दुर्लभतमं संसारसारायितम् ।।१३।।
इत्येषा नवजागृतिः समुदिता भूयात् समाजे पुनः
क्रान्तिः स्यात् परिवेशशोधनपरा वैचारिकी पूर्णतः
अम्ब! त्वाममलां विधातुमधुना सङ्कल्पनीयं ध्रुवं
त्वत्पुत्राः कुमतिं प्रदूषणकरीं दूरे क्षिपन्तु द्रुतम् ।।१४।।

(गङ्गा प्रदूषण सभ्यता का संकट है; इस विकट संकट से उबरने के लिए जन जागरण की अपेक्षा है) क्योंकि गङ्गा रक्षा भारत रक्षा है, गङ्गा रक्षा से जीव और जगत् का संजीवन सम्भव है, गंगा रक्षा ही स्वर्ग और मोक्ष देने वाला विष्णु भजन है और गङ्गा रक्षा ही संसार का अत्यन्त दुर्लभ सार है। आज पुनः ऐसी विचार क्रान्ति की समाज में आवश्यकता है। पर्यावरण की शुद्धता के लिए संकल्पबद्ध होने की आवश्यकता है। हे माता ! तुम्हें निर्मल बनाने के लिए अब तुम्हारे पुत्रों को तैयार होना चाहिए और अपनी प्रदूषणकरी दुर्बुद्धि को त्याग देना चाहिये।।१३-१४।।

The pollution of *Gaṅgā* is catastrophic for the whole civilization. Generating public awareness about this terrible problem may hint at a escape route. The preservation of the identity of *Bhārat* and the entire ecology is interrelated with the protection of *Gaṅgā* which is the living symbol of spirituality. Let us join hands at every level of our existence and enkindle the highest point of intellectual revolution, which shall enable us, O Mother, to protect and preserve you from mindless torture of human society! [13-14]



सर्वतीर्थमयीं गङ्गां स्वर्णदीं सुरदीर्घिकाम् ।
जगदुद्धारिणीं वन्दे लोलकल्लोलमालिनीम् ।।

## प्रथमः सर्गः
## पौराणिकमतम्

श्रीहरेः पादपद्मोद्भवा पावनी,
ब्रह्मणोऽमत्रगा शम्भुमौलौ स्थिता ।
आपतन्ती द्युलोकात् तरङ्गायिता
राजते गाङ्गधारा सिता शीतला ।।१।।
लोककल्याणहेतोरचिन्त्याऽव्यया
सच्चिदाऽऽनन्दरूपाऽप्यभिव्यज्यते ।
गुम्फितः सत्कथासूद्भवोऽस्या भुवि
स्तूयते श्रूयते मानवैः सर्वदा ।।२।।

श्रीहरि के चरण कमलों से उद्भूत, ब्रह्मा के कमण्डलु में विराजमान एवं शम्भु के मस्तक पर स्थित, स्वर्गलोक से उतरती हुई तरंगायित, पावन, शुभ्र एवं शीतल गङ्गा की धारा सुशोभित हो रही है। यह अपने वास्तविक रूप में सच्चिद् आनन्द रूपा है, अचिन्त्य और अव्यय होते हुए भी लोक कल्याण के लिए प्रकट होती है। इसीलिए इसके उद्भव की कथाओं को अनेक प्रकार से गुम्फित कर संसार में मानवों द्वारा गाया जाता है।।१-२।।

The sacred *Gaṅgā* springs up from the lotus-like feet of *Śrī Hari*, gets contained in the chalice of *Brahmā* and dwells on the pinnacle of Lord *Śiva's* head. She gushes down from the celestial world with surging waves and adorns the earth with Her cool purity.This *Gaṅgā*, despite the truth that She is beyond human knowledge and the sense of material exhaustion, has taken a palpable form to bring about welfare to this immense creation.

श्रीकण्ठवासनिलयादतिपुण्यरूपात्
श्रीकण्ठशैलशिखरात् स्रुतदुग्धगङ्गा।
भागीरथीं मिलति हर्षतरङ्गिताङ्गां
नानाप्रपातपरिभूषितचारुगङ्गाम् ।।६३।।

सङ्गं कुर्वत्यसिवरणयोरुत्तरस्याञ्च काश्यां
विश्वेशञ्च प्रणतिबहुलैर्नन्दयन्ती प्रसन्ना।
नानाशैलानथ गिरिगुहा दारयन्ती जवेन
चञ्चत्तोया हरति हृदयं स्वर्धुनी सुप्रवाहा।।६४।।

***टिहरी-वर्णनम्***

पर्वतस्यैकदेशात् स्रुतामापगां
मेलयन्तीह भिल्लाङ्गनामग्रगा ।

सखी की भांति भागीरथी, में आ कर मिल जाती है। श्रीकण्ठ शिव के वासस्थान अत्यन्त पवित्र श्रीकण्ठ पर्वत के शिखर से निकली दूध गङ्गा अनेक झरनों से विभूषित भागीरथी में आकर मिल जाती है। उत्तरकाशी में आकर असि और वरणा को मिलाती हुई तथा विश्वेश्वर को अनेक प्रणामों से आनन्दित करती हुई, अनेक पर्वतों गुफाओं को अपने वेग से तोड़ती हुई, चञ्चलधार वाली और सुन्दर प्रवाह वाली स्वर्धुनी हृदय को हर लेती है। ।।६०-६४।।

भगीरथी पर्वत के एक भाग से निकली भिलङ्गना नदी को यहां पर मिलाती है और लहरों से गरजती - तरजती हुङ्कार भरती हुई सी मानों मानवों के दुष्कार्यों

the water of *Jānhavī Gaṅgā* like a bosom friend and gets merged into *Bhāgīrathī*. *Dūdha Gaṅgā*, which springs out of the sacred *Śri Kaṇṭha Parvata*, the abode of *Śri Kaṇṭha* (*Śiva*), gets united with *Bhāgīrathī*, who is embellished with many streams. The *Swardhunī* infuses in Her the *Asi* and *Varaṇā* at *Uttar kāśī*, pleasing *Viśweśwara* by bowing to Him. She breaks many caves and mountains with Her fierce flow and elates every heart that watches Her.[60-64]

**Ṭihari**

*Bhāgīrathī* joins *Bhilaṅganā* river and seems to be reproaching

गर्जनं तर्जनं हुङ्कृतिं कुर्वती
दुष्कृतिं भर्त्सयन्तीव बाभात्यसौ ।।६५।।
सर्वतन्त्रा स्वतन्त्रा सुराणां नदी
मुक्तिदात्री नृणां बन्धनोद्भेदिका।
सैव बन्धेषु बद्धा विधेया कथं
यन्त्रविद्याप्रवीणैरहो ! साक्षरैः ।।६६।।
अत्र बन्धं प्रतीकर्तुमग्रेसरं
पुत्रमन्वेषयन्तीव सन्दृश्यते।
दारुणेऽस्मिन् कलौ दुःखिता स्वर्धुनी
भर्त्सयन्ती कलां यान्त्रिकीं भूयशः ।।६७।।
टिहरीपर्वते बन्धं क्रियमाणं विपत्करम् ।
प्रतीकर्तुमनश्नन्तं भागीरथ्यास्तटे स्थितम् ।।६८।।
पर्यावरणरक्षायै विमृशन्तं हि सुन्दरं ।
लालं बहुगुणोपेतं स्वर्धुनी वीक्षतेऽधुना ।।६९।।

की भर्त्सना करती हुई लगती है । जो सर्वतन्त्र स्वतन्त्र है, मनुष्यों के सांसारिक बन्धनों को काटती हुई मुक्ति देने वाली है, वही अब साक्षर तकनीकियन्त्रविद्याविशारदों द्वारा बांधों में बांधी जा रही है। वह टिहरी बांध का प्रतीकार करने के लिये आगे आने वाले अपने किसी सुपुत्र को ढूंढती हुई सी लगती है: तथा इस दारुण कलियुग में यान्त्रिक कला की घोर निंदा करती हुई लगती है। टिहरी में विपत्तिकारी बांध का विरोध करने के लिये अनशन करते हुए, पर्यावरण रक्षा के लिये जन जागरण करने वाले श्रीसुन्दर लाल बहुगुणा को स्वर्णदी देख रही है ।।६५-६९।।

the evil deeds of human beings surcharged with her noisy waves. She is the one who is free from every domination and restriction and dispels the bondage of worldly attachments. She herself is being enslaved by the sophisticated technologists. She seems to be looking for an able son who will come forward to dissent against the construction of Ṭiharī Dam. The *Swarṇadī* watches the zeal of Śri Sunderlāl Bahuguṇā who pursues the great mission of rousing public awareness to save ecology and environment.[65-69]

## देवप्रयाग-वर्णनम्

आगते दिव्यदेवप्रयागं शुभे,
कुन्दपुष्पद्युती देवनद्यावुभे ।
शैलशृङ्गारहारावलीवाङ्किते,
सङ्गमायोत्सुकेऽपूर्वशोभावहे ।।७०।।

सरितमलकनन्दामत्र भागीरथीयं
द्रुतगतिरमणीया संगता धावमाना।
सुहृदिव परिसक्ते वीचिहस्तैरसंख्यैर्
गिरिवरतटशोभां वर्धयन्त्यौ विभातः ।।७१।।

उद्गमोऽयं नदीनां तथा सङ्गमो
वक्ति किञ्चिद्गभीरं रहस्यं किमु ?
नूनमाख्यात्यसौ भव्यभौगोलिकीम्
एकतां सर्वतोव्यापिनीं मङ्गलाम् ।।७२।।

कुन्दु पुष्प के समान कान्ति वाली दोनों देवनदियां भागीरथी और अलकनन्दा शुभ देव प्रयाग पहुंचती हैं । दोनों नदियां परस्पर मिलने की इच्छुक हुई पर्वत को हार से सजाती हुई सी अनुपम शोभा युक्त हैं। यहां पर भागीरथी अलकनन्दा से मिलने के लिए द्रुतगति से आती हुई अत्यन्त रमणीय लगती हैं तथा अपनी असंख्य लहरों रूपी हाथों से मित्र की तरह मिली हुई पर्वत के तट की शोभा को बढ़ा रही है। नादियों का उद्गम और सङ्गम – दोनों ही क्या कुछ गम्भीर रहस्य को कहते हुए से लगते हैं ? निश्चय ही यह भारत की भौगोलिक एकता के रहस्य को प्रगट करते

**Deva Prayāga**

The two transluscent rivers *Bhāgīrathī* and *Alakanandā* reach holy *Deva Prayāga*. They seem to frill the mountains like garlands. Desirous of uniting with each other they are brimming with peerless beauty. *Bhāgīrathī* at that spot looks enchanting as she gushes forth to meet *Alakanandā*. She enhances the beauty of the banks embracing them with the thousand friendly arms of her waves. All these streams as though represent the basic unity in diversity existing in the very spirit of India. Though they spring

भारते गोमुखान्निर्गताऽसौ यथा-
ऽनेकधाराभिराभूषिताऽऽवर्द्धिता ।
राष्ट्रधारानुबद्धा तथा वर्तते-
ऽनेकताप्येकताऽखण्डतामण्डिता ।।७३।।
हैमवत्योऽखिला भिन्नदेशोद्गता
एकवर्णा भवन्ति प्रवाहाकुलाः।
अत्र गङ्गेतिनाम्ना समाख्यामिताः
सागरं गन्तुकामाः तरङ्गायिताः ।।७४।।

हैं। भारत में जैसे गोमुख से निकली भागीरथी अनेक धाराओं से सम्भूषित एवं संवर्धित होती है,उसी प्रकार अनेकता एकता और अखण्डता से विभूषित होकर राष्ट्रधारा में अनुस्यूत है। भिन्न -भिन्न देशों से उद्गत होने पर भी ये सभी धारायें हैमवती (हिमालय प्रसूत)हैं तथा सभी देव प्रयाग में आकर एकाकार हो जाती हैं। यहां सबका नाम गङ्गा हो जाता है और वे सागर में जाने के लिए तरङ्गित हैं ।।७०-७४।।

up from different regions yet they are all Himalaya-born . At *Deva Prayāga* they assume a kind of oneness. Here they have all been named *Gaṅgā* as riding the waves they have the same eager volition to reach *Sāgar.*[70-74]



## चतुर्थः सर्गः
## हृषीकेश-वर्णनम्

यत्र कुब्जाम्रवृक्षे हृषीकं मुनिं
दर्शयामास रैभ्यं स्वरूपं हरिः।
यद्धि पौराणिको वक्ति कुब्जाम्रकं[१]
पावनं तं हृषीकेशमासादिता ।।१।।
कूर्मवद् विष्णुदेवो हृषीकाण्यहो!
यत्र संहृत्य तेपे तपः दुष्करम् ।
योगिनां सात्त्विकानां तपस्यास्थलं
पावनं तं हृषीकेशमासादिता[२]।।२।।
दोलयन्ती तरङ्गान्वितैश्चानिलैर्
लक्ष्मणं सेवितुं निर्मितं दोलनम् ।

जहां जितेन्द्रिय रैभ्य को श्रीहरि ने कुबड़े आम्रवृक्ष पर अपना दर्शन दिया था तथा जिस स्थान को पुराणों में कुब्जाम्रक कहा गया है, वहाँ श्रीगङ्गा आयीं । जहां भगवान् ने कछुए के समान इन्द्रियों को समेट कर तप किया था, जो योगियों और सात्त्विकों की तपःस्थली है वहां श्रीगङ्गा पहुंची । यहाँ वह अपनी तरङ्गों से उठी

**HṛṣiKeśa Vignette**

*Śri Gaṅgā* reaches that spot where *Śri Hari* had appeared before the ascetic *Raibhya* on the stunted mango tree (a place which has been named as *Kubjāmraka* in the *Puraṇas*) where *Bhagavān Viṣṇu* had done penance, gathering up his sense organs like a turtle. It is a place of meditation for ascetics and spiritual people. Swinging the *Lakṣmaṇa jhūlā* by the breeze

मीनचक्षुर्भिरालोकतेऽत्राऽनिशं
पर्वतीयानवद्यामहो! रम्यताम् ।।३।।
सेतुमध्येऽत्र दोलायमाने स्थितैर्
दर्शकैर्दीयमानं प्रतिस्पर्धया ।
उच्छलन्नच्छतोयेऽन्नमत्तुं मुदा
मत्स्यपुञ्जो विभात्यद्भुतः सुन्दरः।।४।।
वर्धमानामवारे विकासोन्मुखीं
मानवीं सभ्यतामीक्षमाणा मुहुः।
भाति पारेऽपि नैसर्गिकं निर्जनं
क्लेदयन्ती विलोलैः तरङ्गैर्युता।।५।।
लोलकल्लोलिनीयं सुधास्यन्दिनी
पर्वतीयोन्नतात् सत्पथादद्रिजा ।
वीचिपादैः समे भूतलेऽवातरद्
धावमाना स्वनं कुर्वती घर्घरम् ।।६।।

हवा से लक्ष्मण झूले को झुलाती हुई, मछलियों की आंखों से पर्वतीय अभिरामता को देखती है। इस पुल में खड़े होकर यात्री गण जब मछलियों के लिये दाना डालते हैं तो प्रतिस्पर्धा से उसे खाने के लिये उछलते मछलियों का समूह बड़ा सुन्दर लगता है। इस पार विकास की ओर अग्रसर मानवी सभ्यता को देखती है और उस पार प्राकृतिक तट को चञ्चल लहरों से भिगोती है ।।१-५।।

अब पर्वत पुत्री ऊंचे पहाडों के सुन्दर पथ से नीचे अपनी लहरों रूपी पैरों से

generated by Her own waves, She as if watches through the eyes of fishes the rocky elegance around. Standing on this bridge when the travellers feed the fishes by dropping grains into the river then they vying with each other, jumping to eat the food, seem enchanting. On one of Her banks She witnesses the progressive human culture and with Her quick ripples She waters the natural expanse of the other side.[1-5]

And now the "offspring of the rocks" *Gaṅgā* descends down the beautiful pathways of high mountains tripping on Her feet of

विप्रयुक्ता सती पितृक्रोडात्किलो-
त्कण्ठिता शैलराजात्मजा विह्वला।
स्वीयशब्दायमानोर्मिभिर्मानसीं
खिन्नतां ख्यापयन्तीव सम्प्रस्थिता ।।७।।

*मायापुरी (हरिद्वार)-वर्णनम्*

श्रीहरिद्वारभूतां हरिप्राप्तये
तीर्थरूपाञ्च मायापुरीमागता।
नीलधारास्वरूपेण विभ्राजते
स्वच्छतोया तरङ्गैर्युता शीतला ।।८।।
साऽत्र शुम्भादिदैत्यान् निहन्तुं यथा-
ऽनेकरूपाऽभवच्चण्डिकैका तथा[३]।
सप्तधारासु सप्तर्षिसन्तृप्तये
शोभिता तारिणी पापसंहारिणी।।९।।
राजितां नीलबिल्वाद्रिमध्ये पुरी-
मीक्षती ब्रह्मकुण्डं गता धारया।

उतरती है। घर्घर नाद करती हुई ऐसा लगता है मानो पिता की गोद से बिछुड़ने की व्याकुलता को व्यक्त कर रही हों ।।६-७।।

श्रीहरि की प्राप्ति के लिये द्वार भूत मायापुरी में आकर गङ्गा स्वच्छतोया नील धारा के रूप में सुशोभित है। यहां पर सप्त ऋषियों को तृप्त करने के लिये वह एक होती हुई भी सात धाराओं में उसी प्रकार विभक्त हो गई जैसे चण्डिका शुम्भ आदि दैत्यों के विनाश के लिए एक होते हुए भी अनेक हो गई । नील और बिल्व

waves. The uproar of Her water makes one wonder whether She is expressing sorrow of being alienated from Her father.[6-7]

**Haridwāra**

That pure stream has come to *Māyāpurī* and is known as *Nīla dhārā*, a place which enables the devotee to reach *Śri Hari*. To satiate *Saptarṣi* She has cleaved into seven streams in the same way as *Chaṇḍikā* had become many to destroy the demons like *Śumbha* and others. Flowing past *Māyāpurī*, situated between

वेधसा यत्र तप्तं तपः सिद्धिदं
पूरयन्ती स्वतोयाऽमृतेनाऽनिशम् ।।१०।।
श्वेतनाम्ना प्रसिद्धो नृपश्चैकदा
तोषयामास पद्मोद्भवं भक्तिमान् ।
ईक्षमाणः पृथिव्यां धुनीं प्रस्तुताम्
अध्युवास प्रसन्नो विधिः तत्स्थलम् ।।११।।
विक्रमस्याग्रजन्मा कविःकोविदो
नीतिशृङ्गारवेत्ता विरक्तो भवन् ।
भर्तृहर्याऽऽख्यराजाऽत्र तीव्रं तपो
वासुदेवस्य तुष्ट्यै चचाराद्भुतम् ।।१२।।
निर्मितिर्विक्रमस्याऽद्भुता दृश्यते
यत्र सोपानपङ्क्तिर्मनोहारिणी ।
स्वर्गसोपानरूपा हरेः स्मारिका
प्रापिका विष्णुलोकस्य शान्तिप्रदा ।।१३।।

पर्वत के बीच बसी पुरी को देखते हुए वह एक धारा से ब्रह्मकुण्ड में आ गई, जहां ब्रह्मा जी ने तप किया था। यहीं श्वेत राजा ने भगवान् विष्णु को सन्तुष्ट करने के लिये तपस्या की। पृथ्वी में बहती स्वर्ग की नदी को देखते हुए ब्रह्मा ने भी यहाँ निवास किया । राजा विक्रमादित्य के बड़े भाई, प्रख्यात कवि भर्तृहरि नें भी यहां अद्भुत तप किया । यहीं पर उन की स्मृति में हरि की पैढ़ी है, जो स्वर्ग के सोपान के समान है।।८-१३।।

*Nīla* and *Vilva Parvata*, She has entered as a stream into *Brahmākuṇd*. Once upon a time *Śweta*, the king had undergone penance to please *Bhagavān Viṣṇu*. *Brahmā* also stayed here to do penance and was both astonished and pleased to find the divine river flowing on earth. The celebrated poet *Bhartṛhari*, the elder brother of *Vikramāditya* the king also went through peerless penance here itself. To commemorate his (*Bhartṛhari's*) memory he (*Vikramāditya*) raised the structure of steps along the bank, famed as '*Hari kī paiḍī*', which is like the steps of *Swarga*.[8-13]

सान्ध्यनीराजनं राजते स्वर्णिमं
यत्र दीपावली दीप्यते प्रायशः ।
दृश्यते स्नानलाभाय रम्ये तटे
कुम्भयोगे नराणां महासङ्गमः।।१४।।

दत्तात्रेयमुनेः कुशादिसहिता यावत्प्रयाताऽग्रगा
तावत्तेन तपस्विना सुरधुनी रुद्धप्रवाहा कृता ।
आवर्त्तेषु समस्तवस्तुनिवहं चक्रायमाणं चिरं
दृष्टं यत्र तमेव पश्यति पुनः घट्टं कुशावर्तकम्[१] ।।१५।।

चण्डिकामुच्चकैः संस्थितां मानसां
बिल्वकेशं तथा नीलकण्ठं शिवम्।
स्नापयन्ती सुधा सन्निभैरम्बुभिः
शोभते लोलधारा प्रवाहाकुला।।१६।।

दक्षयज्ञे प्रदग्धां सतीं दुःखितां
त्यक्तदेहां स्वसारं परिप्लावितुम् ।

सायं काल यहां श्रीगङ्गा की आरती अत्यन्त शोभायमान लगती है और कुम्भपर्व में मानवों का महान् सङ्गम होता है। पुनः कुशावर्त घाट में आती है जहां दत्तात्रेयमुनि के कुश कमण्डलु को बहाने की इच्छा वाली इसको उस तपस्वी ने चक्राकार बना कर रोक दिया था। इसी पुरी में ऊंचे पर्वत पर स्थित चण्डिका एवं मनसा देवी तथा बिल्वकेश और नीलकण्ठ शिव को वह अमृत जल से स्नान कराती हुई लगती है। पुनः दक्ष यज्ञ में दग्ध सती, जो दुःखी तथा त्यक्तदेहा है,

In the evening the *ārati* of *Śri Gaṅgā* becomes an elegant act and during *Kumbha* fair there takes place a congregation of millions of human beings. Again She comes to the *Kuśāvartta Ghāt*. It is the place where She was stopped as a whirlpool by the sage *Dattātreya* as she was desirous of washing away his *kuśa*, *kamaṇḍalu* etc. Today also She seems to be bathing *Chaṇḍikā*, *Manasā Devī*, *Vilvakeśa* and *Nīla Kaṇṭha Śiva*, situated on high peaks with Her revitalizing water. She reaches *Kankhal*, where She consoles with wavy arms Her sister *Satī*, who had immolated

स्नेहनीरं समादाय सम्प्रस्थिता
सान्त्वयन्तीव तां वीचिहस्तैः शुभैः ।।१७।।
कनखले जनकेन तिरस्कृतां
पतिपराभवरोषभयङ्करीम् ।
मखविनाशकरीं ज्वलितां सतीम्
अहह! भस्ममयीं ददृशे तदा ।।१८।।

### *कण्वाश्रम-वर्णनम्*

आगता तत्र गङ्गा प्रसन्नोर्मिभिर्
यत्र कण्वोऽवसत् सुप्रशान्ते वने ।
नैष्ठिकब्रह्मचारी व्रती ब्राह्मण-
श्छन्दसां पारदृश्वा विधिज्ञो मुनिः ।।१९।।
वत्सलाकोमलाङ्गी मृगाक्षी मृगान्
कण्वपुत्री स्वपुत्रोपमान् शावकान् ।

उस प्रिय बहन को लहरों रूपी हाथों से सान्त्वना देती हुई कनखल पहुंचती है। वहां पिता द्वारा तिरस्कृत, पति के पराभव को देख रोष से भयङ्कर, यज्ञ का विध्वंस करने वाली, जलकर राख के रूप में परिणत सती को देखती है।।१४-१८।।

अब श्रीगङ्गा नैष्ठिक ब्रह्मचारी,वेदज्ञ, व्रतधारी ब्राह्मण कण्व मुनि के प्रशान्त आश्रम में पहुंची, जहां वात्सल्य परिपूर्ण कोमल अङ्गों वाली मृगनयनी शकुन्तला नीवार धान्य से मृगशावकों को पालती थी और पौधों में सहोदर भाव रख कर उन्हें

herself in the *Dakṣa yajña* long long ago. She contemplates *Satī*, who had transmuted herself into ashes, on being castigated by her father. Unable to bear the humiliation of her husband here *Satī*, fierce with rage, had devastated the *yajña*.[14-18]

**Kaṇvāshrama**

*Śrī Gaṅgā* reaches the peaceful hermitage of *Kaṇvāshrama*, a devoted and assiduous seer of the *Vedas* where the affectionate, soft-limbed, deer-eyed *Śakuntalā*, who propagated the notion of universal brotherhood while she tended the brotherly saplings,

यत्र नीवारधान्यैः पुपोष स्वयं
तं प्रसिद्धं पवित्राश्रमं पश्यति ।।२०।।

यत्र सोदर्यभावाञ्चिता पादपै-
र्लालिता सा शकुन्तैर् निसर्गप्रिया।
विश्वबन्धुत्वशिक्षामनन्ताङ्गणे
प्रैषयत् तं पवित्राश्रमं पश्यति ।।२१।।

वेदपाठेन गुञ्जायमानोऽनिशं
हव्यगन्धैश्च धूपायितो नित्यशः।
आश्रमोऽसौ प्रदीप्तः तपोभिश्चिरं
मालिनीकूलवर्ती मनोहारकः ।।२२।।

वल्कलैः सज्जितान् मन्त्रपाठे रतान्
भ्रष्टपाठान् बटून् वारयन्तः पुरा।
किंशुकान् स्पर्धमानाः शुकाश्चञ्चुभिः
शाखिनां कोटरेषु स्थिता रेजिरे।।२३।।

सागरं चुम्बितुं वीचिभिश्चञ्चलां
मालिनीं कामिनीमीक्षती सस्मिता।

सींचती हुई विश्व बन्धुत्व की शिक्षा का प्रसार करती थी। वेद पाठ से वह आश्रम सदा गुञ्जित रहता था तथा यज्ञ के हविर्गन्ध से सुगन्धित और तप से प्रदीप्त था। वह आश्रम मालिनी के तट पर स्थित था। वहां वल्कल पहने, मन्त्र पाठ में लगे, बटुओं को पाठ के गलत हो जाने पर पेड़ों के कोटर में बैठे लाल ठोंठ वाले तोते टोका करते थे। वहां सागर का चुम्बन करने के लिये व्याकुल कामिनी की भांति

and fed the fawns with *Nīvār* grains. The hermitage resounded with the echoes of *Vedic* chants and was surcharged with ambrosial fragrance. The refulgence of ascetic penance stood like an aura. The hermitage stood on the bank of *Mālinī* river. Here the red-beaked parrots sitting in the hollow of the trees checked the disciples erring in their lessons. She (*Gaṅgā*) has smilingly taken along Her stride the river *Mālinī* who seems impassioned to touch the ocean.[19-24]

सङ्गमायोद्यतां तां नयन्ती सती
राजते गङ्गधारा सिता शीतला ।।२४।।

**शुकाश्रम (शुकताल) वर्णनम्**

यत्र परमात्मभावः स्फुटश्चिन्मयः
सर्वदा द्योतते स्वप्रकाशोऽद्वयः।
भक्तिपीयूषपानाय तत्राप्यसौ
सुप्रविष्टा तरङ्गैः शुकस्याश्रमम् ।।२५।।
श्रावयामास तापापहाराय स
श्रीशुकः पार्थपौत्रं पवित्रां कथाम् ।
पावयन्त्यश्च गङ्गालहर्यः शुभा
आगता आश्रमं श्रोतुकामा इव ।।२६।।
तत्र लोलैः तरङ्गाक्षिभिर् वीक्षते
कृष्णतत्त्वं समस्तेषु जीवेषु यत् ।

मालिनी को देखकर मुस्काती हुई गङ्गा उसे लेकर आगे बढ़ी ।।१९-२४।।

जहां चिन्मय, स्वप्रकाश, परमात्मभाव स्फुट है वहां भक्तिसुधा का पान करने के लिए श्रीगङ्गा अपनी तरङ्गों से प्रविष्ट हुई। जहाँ शुकदेव मुनि ने अर्जुन के पौत्र परीक्षित को भागवत की पवित्र कथा सुनाई, मानो उस कथा को सुनने की इच्छा से शुक के उस आश्रम को पवित्र करती हुई गङ्गा की लहरें वहाँ पहुंची। अपनी चञ्चल लहरों रूपी आंखों से मानों वहां वह समस्त जीवों में कृष्ण तत्त्व को देख कर

**Śukatāl**

She has entered with Her waves *Śukatāl*, resplendent with the brilliance of supra-consciousness, to drink deep into the stream of devotion and to be saturated with the feeling of *Bhakti*. Here in the hermitage of *Śukadeva* the sage (*Śukdeva*) had preached the sacred *Bhāgavata Purāṇa* to *Parīkṣita*, the grandson of *Arjuna*, the swell of *Śri Gaṅgā* today too reached the same hermitage purifying it and seems desirous of listening to the narration of the holy scripture and looking through Her wet eyes She envisaged

तेन सर्वं जगत् स्थावरं जङ्गमं
वासुदेवस्वरूपं ध्रुवं मन्यते ।।२७।।
राजधानी कुरूणां तया दृश्यते
हस्तिनापूरिति ख्यातिलब्धा वरा।
यत्र सास्मर्यते शन्तनुर्भूपतिः
तत्सुतो भीष्मनामा परं साहसी ।।२८।।
यत्र गङ्गाऽवहद् दीर्घकालावधिं
सा ततो विप्रकृष्टाऽभवत् साम्प्रतम् ।
तत्र धाराऽपरा वृद्धगङ्गाऽभिधा
शोभते लोकपापापहा निम्नगा ।।२९।।
तां समादाय यातोच्छलद्वीचिभिर्
द्रष्टुकामाऽथ मुक्तेश्वरं मुक्तिदम् ।
पुष्पवत्यां शिवं मण्डकेशं पुनः
पूजयित्वा गता नागयज्ञस्थलम् ।।३०।।
इष्टवान् सर्पयज्ञं पितुः कारणाद्
अत्र पारीक्षितः शोकसम्मूर्छितः।

समस्त स्थावर जङ्गम को वासुदेवमय समझने लगी।।२५-२७।।

आगे कुरु की राजधानी हस्तिनापुर पहुंची, यहां राजा शान्तनु और पुत्र भीष्म को स्मरण करती हुई बहुत काल तक बहीं, किन्तु अब यहां से दूर हो गई हैं और अपनी एक धारा बूढ़ी गंगा को मिलाती हुई गढमुक्तेश्वर पहुंची हैं। इसके आगे पुष्पवती (पूठ) में मंडकेश्वर की पूजा कर अहार पहुंची। जहां पिता की मृत्यु का

the entire living and non-living world as the emanation of *Kṛṣṇa.*[25-27]

In the past She travelled further to *Hastināpura*, the capital of *Kuru*. Here She rolled for a long time recalling *Śāntanu*, the king and his son *Bhīṣma*. But now She has changed Her course and later one of Her streams reached *Gaḍha mukteśwar*. At *Puṣpāvatī* She prayed to *Maṇḍakeśwar* and flowed to *Ahār*. Here *Janamejaya*, the son of *Parīkṣita*, in order to avenge the death of

भस्मसात् संविधातुं रिपुं तक्षकं
नागजातं जुहाव क्रुधा पार्थिवः।।३१।।
प्राक्षिपत् क्वापि कानीनमस्या जले
हन्त लोकापवादाद् वराकी पृथा।
यत्र दृष्टः पुरा दानवीरोऽनया
तन्निवासस्थलं कर्णवासः स्मृतः।।३२।।
अर्चितुं श्वेतवाराहदेवं गता
किन्त्विदानीं परित्यक्तमेतत्स्थलम्।
किञ्च, काम्पिल्यपूरीक्ष्यते दूरतो
धावमानेव शृङ्.याश्रमं गच्छति।।३३।।
श्यामकर्णाश्वशुल्कं ददौ गाधये
तत्सुतापाणिमिच्छन् ऋचीको मुनिः।
यत्र हर्षो जहर्ष प्रसिद्धो नृपः
कान्यकुब्जं तमासादयत् पुण्यदा।।३४।।

बदला लेने के लिए परीक्षित पुत्र जनमेजय ने नागयज्ञ किया और तक्षक को मारने के लिए क्रोध से राजा ने अनेक सर्पों को यज्ञाग्नि में झोंक दिया। पुनः गङ्गा लोकापवाद से डरी कुन्ती द्वारा जल में बहाये गये कर्ण के निवास स्थान् कर्णवास में आज भी सुशोभित हैं। वे सोरों और कम्पिल्य में पहले बहती थीं, उसके बाद शृङ्गीरामपुर से कन्नौज आईं, जहां ऋचीक मुनि ने गाधि ऋषि से श्याम कर्ण घोड़े लेकर अपनी पुत्री दी थी (यह स्थान अश्वतीर्थ कहलाया)। कन्नौज में राजा हर्ष ने राज्य किया।।२८-३४।।

his father, had performed *Nāga yajña* and had charmed a number of snakes to enter the fire of sacrifice to destroy *Takṣaka*. She has flown past *Karṇavāsa*, where *Kuntī* out of her shame of public censure had thrown her son *Karṇa* into *Gaṅgā*. She has crossed *Soron* and *Kāmpilya* and has come down to *Śṛṅgī rāmpura* and then has touched *Kannauja* (*Aśvatīrtha*) where once the sage *Ṛchīka* had wedded his daughter with *Gādhi* in return of black-eared horses. The historical documents reveal that the king *Harṣa* also ruled here.[28-34]

*Rāma Gaṅgā* initially emerging as a very lean stream broadens

उद्गमेऽणीयसी याऽम्बुधारा स्रुता
सैव वैपुल्यमासाद्य सद्योऽद्भुतम्।
सिञ्चती सस्यसम्पत्तिदात्रीं धरां
रामगङ्गा[९] समालिङ्गति स्वर्धुनीम् ।।३५।।

अत्र लक्ष्मीं स्मरत्यर्पयित्रीमसून्
राष्ट्ररक्षारतां सैन्यसञ्चालिकाम् ।
आंग्लसेनां तृणं मन्यमानां रणे
तां यशोविग्रहां वीरबालां मनुम् ।।३६।।

'एको रसः करुण'[१०] इत्यभिमन्यमानं
स्नेहेन सिञ्चितवती भवभूतिमत्र।
भोजं नृपञ्च कविकर्मणि सुप्रवीणं
स्मृत्वा प्रसीदतितरामिह कान्यकुब्जे ।।३७।।

जो अपने उद्गम स्थान में अत्यन्त पतली धारा है किन्तु कुछ ही दूर जाने पर विपुलता को प्राप्त करती हुई नदी का रूप ले लेती है ; फसलों से भरी जमीन को सींचती हुई वह राम गङ्गा यहाँ गङ्गा में मिल जाती है। तत्पश्चात् वे महारानी लक्ष्मीबाई, बीरबाला मनु, जिसने राष्ट्र की रक्षा के लिये सैन्य सञ्चालन करते हुए अपने प्राण अर्पण कर दिये थे, का स्मरण करती हुई बिठूर आयीं। एक मात्र करुण रस को ही मानने वाले भवभूति को स्नेह से सिञ्चित करती हुई, कवि कर्मनिपुण भोज को स्मरण करके वह प्रसन्न होती है।।३५-३७।।

into a gigantic river. After pacing for some miles it gets united with numerous tributaries and around *Kannauja* merges into *Gaṅgā*. She flows past *Biṭhūra* paying homage to *Rānī Lakṣmī Bai*. The queen sacrified her life for the sake of her dear motherland, commanding her army in the bravest possible way. She (*Gaṅgā*) seems to be delighted to have blessed *Bhava bhūti* who has given *Karuṇa rasa* the highest place in literature.She has also honoured the outstanding creativity of king *Bhoja*.[35-37]

कर्णपुर-वर्णनम्

शश्वदुद्योग-संस्थानजातोद्भवैर्
दूषणैः सङ्कुलं कर्णपूर्वंपुरम् [११]।
दूयमानेक्षते स्वर्धुनी साम्प्रतं
श्रीयुतं श्रीविहीनं जुगुप्साकरम् ।।३८।।
नैव कञ्चित्प्रवक्तुं क्षमा स्वव्यथाम्
अक्षमा वीक्षितुं तान् विषाक्तान् नदान् ।
संवहन्ती सुतानां कृतं दुष्कृतं
लज्जिता धर्षिता चिन्तिता स्वर्धुनी ।।३९।।
व्याकुला दूषणैश्चर्मगन्धोद्भवैर्
मिश्रितैरुग्ररासायनैर्मारकैः ।
वेदनां मार्मिकां वक्तुकामेव सा
प्रस्थिता तीर्थराजप्रयागं प्रति ।।४०।।

स्वर्धुनी निरन्तर कारखानों के निकलने वाले कूड़े-कचरे से भरे हुए धन से पूर्ण किन्तु शोभाहीन कानपुर शहर को देखकर बड़ी दुःखी होती हैं। किसी से अपनी पीड़ा को कहने में असमर्थ तथा उन विषैले बड़े-बड़े नालों को देखने में भी असमर्थ गङ्गा अपने ही पुत्रों के पापों को ढोती हुई बड़ी लज्जित और दुःखी है। चमड़े के गन्ध के प्रदूषण से तथा जान लेवा रासायनिक द्रवों से व्याकुल होकर मानों अपने हृदय की मार्मिक वेदना को तीर्थराज प्रयाग से कहने के लिये वह आगे चल पड़ती है।३८-४०।।

**Kanpur**

The *Swardhunī* is deeply dismayed to behold the plight of the city Kanpur. It is buried under the wealth of riches yet suffocates under the filth of pollution. The meterialistic riches of the city has added to its destitution. She is unable to confide Her sorrow to anyone else. She relunctantly looks at the huge filth bearing sewers which pour into Her and make her dejected. She feels mortified to shoulder the burden of sins of Her sons. Unable to endure the harrowing stentch that emanates out of the tanneries and the deadly chemicals, She as if flows towards *Tīrtharaja Prayāga* to unburden the anguish of Her heart.[38-40]

## पञ्चमः सर्गः
## प्रयाग-वर्णनम्

इष्टवान् वेदवेत्ता विधाता पुरा
यत्र यागं[1] प्रकृष्टं महापुण्यदम् ।
संस्मरन्तीव माहात्म्यमस्याद्भुतं
प्रस्थिता तीर्थराजप्रयागं प्रति ।।१।।
वत्सनाम्ना[2] प्रसिद्धो य आसीत्पुरा
पुष्यमित्रस्य यागात् प्रयागोऽभवत् ।
साम्प्रतं यावनेनाऽभिधानेन वा
तावदल्लाह[3]- वासोऽपि विज्ञायते ।।२।।

गङ्गा जहां प्राचीन काल में ब्रह्मा ने बहुत बड़ा पुण्यदायी यज्ञ किया था, उस प्रयाग के पवित्र माहात्म्य का स्मरण करती हुई सी आई। यह जनपद पहले वत्स नाम से जाना जाता था, पुष्यमित्र शुङ्ग ने यहां यज्ञ किया अतः इसका नाम प्रयाग हुआ, तत्पश्चात् यवन सम्राट् अकबर ने इसका नाम अल्लाहवास-इलाहाबाद रखा।।१-२।।

**Tirtharaj Prayaga Vignette**

It is the place where aeons ago *Brahmā* had done a holy *yajña*. She comes here as though to commemorate that gigantic act. This district was known as *Vatsa* in the earlier times but when *Puṣyamitra* did the *yajña*, it came to be celebrated as *Prayāga*. Later emperor Akbar named it as Allahabad.[1-2]

### यमुना-वर्णनम्

उन्नताच्छैलश्रृङ्गात् कलिन्दाच्च्युतां
नीलकान्त्याऽभिरामां तरङ्गायिताम् ।
एकतोऽपूर्वधारां गभीरामभि-
प्रेक्षमाणाऽऽगता तीर्थराजं प्रति ।।३।।

मेलयन्ती बहून्निर्झरानापगाः
तामजस्त्रप्रवाहां मनोहारिणीम् ।
तीव्रवेगां सुरम्यां विशालां नदीं
प्रेक्षमाणाऽऽगता तीर्थराजं प्रति ।।४।।

वीचिहस्तैरसंख्यैः समालिङ्गितुम्
उत्सुकामेकतो दृश्यमानां शुभाम् ।
भद्रदां नीलरत्नाऽऽभसंशोभितां
प्रेक्षमाणाऽऽगता तीर्थराजं प्रति ।।५।।

कृष्णरागानुरक्ताऽर्कजां कोमलां
राधिकाऽऽराध्यमाराधने तत्पराम् ।
चिद्घनानन्दलीनां प्रफुल्लान्तरां
प्रेक्षमाणाऽऽगता तीर्थराजं प्रति ।।६।।

गङ्गा ऊंचे कलिन्द पर्वत से गिरती नील कान्ति से अभिराम गम्भीर धारा यमुना को सामने से आती हुई देखते हुई तीर्थराज प्रयाग आई। अनेक झरनों , नदियों को मिलाती हुई, अजस्त्र प्रवाह वाली, तीव्र वेग वाली, लहरों रूपी हाथों से आलिङ्गन करने के लिए उत्सुक, कल्याण कारिणी, नीलम की आभा से सुशोभित, कृष्ण के अनुराग में रंगी, सूर्यतनया, राधिका के आराध्य की आराधना में लगी, चैतन्य और

**Yamunā**

*Śrī Gaṅgā* comes to *Prayāga* gazing at the scintillatingly bluish stream falling from the high peaks of *Kalinda* mountain. She witnesses *Yamunā*, who is full of sharp currents eager to embrace the wavy arms of other brooks and tributaries. It is believed that *Śrī Hari*, the protector of the universe (*Viśwapā*) who

शेषशायी वसत्यर्णवे विश्वपा
तस्य पादारविन्दे मिलिन्दायितुम् ।
यम्यते भक्तिमत्या स्वरूपं निजं
गाङ्गनीरे यया राजते साऽमला ।।७।।

**सङ्गम-वर्णनम्**

यावदेनां कलिन्दाद्रिजाऽऽगच्छति
स्नेहपूरैस्तरङ्गैः समालिङ्गितुम् ।
गुप्तरूपेण तावत्सरस्वत्यपी-
हागतातस्त्रिवेणी स्थलीयं स्मृता ।।८।।
गाङ्गतोयं सितं यामुनाम्भोऽसितं
स्पर्धमानं मिथः मेलितुं चञ्चलम् ।

आनन्द स्वरूप गोविन्द में लीन होने से आनन्दित हृदयवाली यमुना को देखती हुई वह आई। विश्वपालक शेषशायी श्रीहरि समुद्र में बसते हैं, उनके चरण कमलों में भ्रमर के समान आचरण करती हुई भक्तिमती यमुना अपने स्वरूप को गङ्गा जी में मिलाती हैं। ।।३-७।।

जब तक कलिन्द तनया (यमुना) स्नेह प्रवाह से इन (गङ्गा) को आलिङ्गन करने के लिये आती हैं, तब तक अन्तः सलिला होकर सरस्वती भी वहां मिल जाती है; इसलिए वह स्थल त्रिवेणी कहलाता है। गङ्गा जल सफेद है और यमुना जल

sleeps on the serpent named *Śeṣa* (*Śeṣa śāyī*), resides in the ocean. *Yamunā* offers her prayers to the lotus feet of *Hari* like a bee, therefore, it seems that she merges herself in *Gaṅgā* to go to the ocean to see Him.[3-7]

**The Saṅgam**

As the daughter of *Kalinda* she courses ahead to embrace *Gaṅgā* affectionately. The subterranean river *Saraswatī* comes and joins them. This confluence of three rivers has made the place celebrated as *Trivenī* where the pristine white water of *Gaṅgā* and the azure blue-coloured water of *Yamunā* try to reach each other. To see this flux of colours one wonders whether sapphire

इन्द्रनीले मणौ मौक्तिकं किन्विदं
छायया सङ्गतो भ्राजते वाऽऽतपः ।।९।।
सङ्गमोऽनेकधाराकृतः शोभते
भारतीयैकतां साधयन्नेकतः ।
संस्कृतीनां महासङ्गमोऽस्यास्तटे
राष्ट्रियैकत्वसंवाहकश्चान्यतः ।।१०।।
कर्मयोगे रता भक्तिधाराप्लुता
ज्ञानमार्गेऽनुरक्ताश्च सारस्वताः ।
योगसिद्धा मुनीशाः सदा कुर्वते
धर्मतत्त्वोपदेशं त्रिवेणी तटे ।।११।।
ज्ञानिवर्यं प्रयागे समासङ्गतं
भक्तवर्यो भरद्वाजनामा ४ ऋषिः ।
स्वाश्रमं नीतवान् सादरं पावनीं
श्रोतुकामः कथामत्र रामायणीम् ।।१२।।

श्यामल दोनों जब स्पर्धा में मिलने के लिये चञ्चल होते हैं तो सन्देह होता है कि क्या यह नीलम में रखा हुआ मोती है अथवा छाया से मिली हुई धूप?।।८-९।।

अनेक धाराओं का सङ्गम एक ओर भारतीय एकता को पुष्ट करता है दूसरी ओर इस त्रिवेणी तट पर अनेक संस्कृतियों का सङ्गम राष्ट्रिय एकता एवं अखण्डता का संवाहक है। कर्मयोग में लगे, भक्ति की धारा से स्नात, ज्ञान मार्ग का अवलम्बन करने वाले विद्वान् , सिद्ध, योगी, और मुनि त्रिवेणी के तट पर धर्म का उपदेश देते हैं। प्रयाग में आये ज्ञानी याज्ञवल्क्य से भक्त राज भरद्वाज ऋषि रामायण की कथा

is conjoined with pearl or is it a chiaroscuro of light and shade?[8-9]

The union of numerous streams and the harmonious co-existence of various cultures along the banks of *Trivenī* confirm the notion of unity in diversity of Indian life. The followers of the path of action (*Karma*), knowledge (*Jñyāna*) and devotion (*Bhakti*) can be seen preaching the core of *Dharma* to enlightened people.The great *Bharadwāja muni* desired to listen to the narration of the *Rāmāyaṇa* from *Yājñavalkya*, so he invited

बोधयद् याज्ञवल्क्यस्तदा तं मुनिं
रामगाथारहस्यं परं दुर्लभम् ।
सङ्गतेव प्रतीता त्रिवेणीतटे
भक्तिमन्दाकिनी सत्कथारूपिणी ।।१३।।
दृष्टवानेकदाऽद्वैतवादी महान्
शङ्कराचार्यपादः परिव्राजकः [५] ।
भट्टवर्यं ज्वलन्तं तुषाग्नौ चिरं
कर्मकाण्डप्रदीपं तुतातं [६] द्विजम् ।।१४।।
कर्मणोऽप्यस्तु बोधेन सम्मेलनं
चिन्तयित्वा दृढं तेन मेधाविना ।
शङ्करो वेदरक्षाव्रती शाश्वत-
ज्ञानमार्ग - प्रचाराय सम्प्रेरितः ।।१५।।
नामसङ्कीर्तनं केवलं श्रीहरे-
रस्त्युपायो भवाब्धेस्तितीर्षावताम् ।

सुनने के इच्छुक थे, अतः उन्होंने अपने आश्रम में उन्हें सादर आमन्त्रित किया। याज्ञवल्क्य ने राम कथा के रहस्य को समझाया। इस प्रकार त्रिवेणी के तट पर भक्ति मन्दाकिनी कथा रूपिणी होकर बहने लगी। एक बार अद्वैतवादी शंङ्कराचार्य सङ्गम तट पर आये, वहां उन्होंने कर्मकाण्ड के संस्थापक कुमारिलभट्ट को प्रायश्चित करते हुए तुषानल में जलते देखा। ज्ञान कर्म समुच्चय करने के लिए उन मेधावी कुमारिल ने शंङ्कराचार्य को ज्ञानमार्ग के प्रचार की प्रेरणा दी।।१०-१५।।

भवसागर से पार होने का एक मात्र उपाय नाम सङ्कीर्तन है- यह बताते हुए

the latter with great regard to grace his hermitage. *Yājñavalkya* enabled him to get an insight into the mystery of *Rāmakathā.* Thus *Gaṅgā* flows like the stream of devotion along the banks of *Triveṇī*. *Śaṅkarāchārya*, the propounder of *Advaita* had also come to *Triveṇī*. Here he saw *Kumāril Bhaṭṭa* burning in husk-fire for atonement. *Kumāril*, a great scholār of *Mīmānsā Śāstra* inspired *Śaṅkarāchārya* to propagate the message of the path of knowledge.[10-15]

*Chaitanya Mahāprabhu* too came here. He held that the

अत्र चैतन्यदेवो[७] वदन्नागतः
कृष्णराधाप्रियो वीतरागो यतिः ।।१६।।
पुष्टिमार्गप्रणेताऽमिलत् तं तदा
वल्लभाचार्यपादो हरेर्वल्लभः ।
प्रेममूर्तिं भजन्तं हरिं केवलं
कृष्णरूपं महान्तं परं सुन्दरम् ।।१७।।
यामुनीं नीलिमां वीक्ष्य गौरः प्रभुः
कृष्ण एवेति मत्त्वाऽतिभावाकुलः ।
मज्जितुं नीलधारातरङ्गं गतः
प्रेमधारातरङ्गेण रोमाञ्चितः ।।१८।।

रामानन्दो[८] जयति स यतिः राघवाचार्यशिष्यो
ज्ञानी ध्यानी सदयहृदयो लब्धजन्मा प्रयागे ।
लोके कर्तुं मधुरवचसा रामभक्तिप्रचारं
ग्रामाद् ग्रामं सततमगमद् वैष्णवोऽसौ महात्मा ।।१९।।

चैतन्यमहाप्रभु भी यहां आये, जो राधाकृष्ण के भक्त वीतराग साधु थे। यहां उनसे पुष्टिमार्गी महाप्रभु वल्लभाचार्य भी मिले। वे प्रेममूर्ति, परम सुन्दर, साक्षात् कृष्ण रूप, गौराङ्ग प्रभु यमुना की नीलिमा को कृष्ण समझकर बार-बार उसमें डूब जाते थे और प्रेम से रोमाञ्चित हो जाते थे । माधवाचार्य के शिष्य जगद्गुरु रामानन्दाचार्य भी संसार में राम-भक्ति का प्रचार करने के लिये एक गांव से दूसरे गांव गये। उन वैष्णव महात्मा का जन्म भी प्रयाग में हुआ था।।१६-१९।।

chanting of the Lord's name alone liberates from the maze of birth and death. He was the great devotee of *Rādhā* and *Kṛṣṇa*. *Mahāprabhu Ballabhāchārya*, the follower of *Puṣṭimārga*, met *Chaitanya* here. *Rāmānandāchārya*, the great disciple of *Rāghavāchārya* also wandered from place to place in order to infuse in the people the devotion for Lord *Rāma*. He too was born in *Prayāga*.[16-19]

अत्र बुद्धो महात्मा दयालुर्महान्
　　　　आगतो　　　　बौद्धधर्मप्रतिष्ठापकः।
किञ्च, सम्राडशोको विलोक्याऽद्भुतं
　　　　सङ्गमं　देवनद्योः　परं　विस्मितः[९] ।।२०।।
चीनदेशाद्धि वैदेशिकौ यात्रिणौ
　　　　भारतं　　पर्यटन्तौ　　समासादितौ ।
अत्र　फाह्याननामा　प्रसिद्धस्तथा
　　　　ह्वेनसाङ्गोऽपरो　लेखको　विश्रुतः[१०] ।।२१।।
पुण्यभूमिं प्रयागं सिषेवे चिरं
　　　　यो　　दयानन्दनामा　　महर्षिर्यतिः[११]।
वेदतत्त्वं गुहायां स्थितं दुर्लभं
　　　　ज्ञातुमापातचिन्तापरः　　सोऽभवत् ।।२२।।
सङ्गता गुप्तरूपेण याऽन्तर्जला
　　　　तीर्थराजप्रयागे　　　सरस्वत्यसौ ।
राष्ट्रभाषाकवीनां मुखादुद्गता
　　　　काव्यधारामयी　　मञ्जुवर्णात्मिका ।।२३।।

बौद्ध धर्म के संस्थापक, करुणावतार गौतम बुद्ध भी यहां आये। सम्राट् अशोक भी देवनदियों का सङ्गम देख कर प्रभावित हुआ। चीन देश के विदेशी यात्री फाह्यान और ह्वेनसांग भी भारत में पर्यटन करते हुए यहां आये । आर्यसमाज के स्थापक दयानन्द ने भी पुण्यभूमि प्रयाग में कुछ दिन तक निवास किया । जो सरस्वती गंगा यमुना के साथ गुप्तरूप में मिली थी, वही राष्ट्रभाषा हिन्दी के कवियों के मुख से कविता के रूप में फूट पड़ी।।२०-२३।।

*Gautam Buddha*, the founder of Buddhism, the compassion incarnate also had visited this place. The travellers from China like Hiuen-tsiang and Fa-hien while moving through also came to *Prayāga*. *Dayānanda*, the founder of *Ārya-samāja* too stayed here for a short while.The *Saraswatī* which had remained secretly interwoven with *Gaṅgā* and *Yamunā* as if in our times has burst out in the form of poetry created by the poets of Hindi - our national language.[20-23]

उद्यता दासताशृङ्खलोच्छेदने
जीवनोत्सर्गरूपाऽमरा निर्जरा ।
शासकान् कम्पयन्त्यत्र वैदेशिकान्
जागृता राष्ट्रिया चेतना मङ्गला ।।२४।।
वेषभूषान्नपानेषु भिन्ना अपि
प्रान्तभाषादिभेदेऽप्यभिन्ना नराः ।
राष्ट्रियैकत्वबुद्धेरनुप्राणिताः
सङ्गताः सङ्गमं सेवमानाः सदा ।।२५।।
यत्र 'विश्वं भवत्येकनीडं' ध्रुवं
तैर्महावाक्यमेतद्धि सत्यापितम् ।
धर्मसूत्रे निबद्धैः सदाचारिभिः
कल्पवासाय सङ्कल्पयद्भिश्चिरम् ।।२६।।
स्नानलाभाय सङ्क्रान्तियोगे शुभे
माघमासे त्रिवेणीतटे पावने ।
दृश्यमानो महासङ्गमः सुन्दरो
द्वादशाब्दे महाकुम्भपर्वण्यसौ ।।२७।।

दासता की शृङ्खला को तोड़ने के लिये जीवन बलिदान करने के लिये स्वतन्त्रता आन्दोलन की राष्ट्रिय चेतना का जागरण भी यहां हुआ। खान-पान, वेश-भूषा, भाषा, रीति-रिवाज, के भिन्न-भिन्न होने पर भी सभी भारतीय राष्ट्रिय एकता की बुद्धि से अनुप्राणित हो कर सङ्गम में एकत्र होते हैं। धर्म के सूत्र में बंधे कल्पवासी जहां 'यत्र विश्वं भवत्येक नीडम्' (विश्व नीड़बन जाता) उक्ति को सार्थक किया करते हैं। माघ के महीने में मकर संङ्क्रान्ति के पवित्र काल में त्रिवेणी सङ्गम में बारह वर्ष के कुम्भ और छः वर्ष के अर्धकुम्भ पर्व के अवसर पर मानवों का विशाल सङ्गम होता है।।२४-२७।।

This place is unique for its association with the freedom movement. The first rays of nationalism were cherished by *Prayāga.* Despite diversity in different walks of life the concept of world as a cohesive family has been extolled here at *Trivenī Saṅgam.* It is the holy spot where the *Kumbha* celebrations are held every sixth and twelfth year.[24-27]

कान्यकुब्जेश्वरः कुम्भयोगे पुरा
राजकोषं ददौ नैकवारं मुदा [१२] ।
मानसे हर्षमावर्धयन् शोभितः
पुण्यकाले सदा भूपतिः सङ्गमे ।।२८।।
धार्मिकीमेकतां वा चिकीर्षुः सुधी
शङ्करः कारयामास सम्मेलनम् ।
सम्प्रदायान् समस्तानिहाहूतवान्
वैदिकीं संस्कृतिं भारते स्थापयन् ।।२९।।
कुम्भमेलापकोऽप्यत्र सन्दृश्यते
संस्कृतेरैक्यसम्पादकः सुन्दरः ।
लोकशास्त्रोभयोः सङ्गमेन स्वयं
सङ्गमः सार्थकोऽभूत् चिरायाद्भुतः ।।३०।।
पुण्यकालेऽमृते स्नानदानादिना
सत्त्वरं दोषजातं विनष्टं भवेत् ।
धर्ममूलं समीहाऽभ्युदीयादहो !
सिद्ध्यतेऽर्थद्वयं सङ्गते सङ्गमे ।।३१।।

कन्नौज के राजा हर्षवर्धन इस कुम्भ पर्व में अपने सम्पूर्ण राजकोष को दान किया करते थे। शंङ्कराचार्य कुम्भ के अवसर पर यहां सभी सम्प्रदायों एवं मतावलम्बियों को एकत्र कर धार्मिकी एकता की स्थापना के लिए विशाल सम्मेलन करते थे। संस्कृति की एकता का संवाहक कुम्भ मेला भी यहां आयोजित होता है। इस प्रकार इस सङ्गम में लोकरीति और शास्त्र सिद्धान्त दोनों का संगम हैं। इस अमृतकाल में सम्पूर्ण दोष नष्ट होते हैं और धर्म को जानने की इच्छा (विविदिषा)जागती है।।२८-३१।।

History tells us that *Harṣa*, the king of *Kannauja* donated liberally from his royal coffer during the *Kumbha*. *Śaṅkarāchārya* organised a great congregation by gathering believers of various faiths so as to promote religous tolerance. Hence, *Kumbha* happens to be a convergence of folk tradition and higher philosophical doctrines.[28-31]

गोलोके विरजाऽऽपगा[13]-सहचरी रासेश्वरप्रेयसी
सम्प्राप्ता यमुना भुवीक्षितुमहो! लीलां हरेरद्भुताम् ।
श्रीकृष्णाङ्गसमुद्भवां सुविशदां गङ्गां विलोक्याऽनुजां
धावन्तीमनुरागनिर्भरभरां कण्ठे समालिङ्गति ।।३२।।

कालिन्दीतट-कुञ्ज-गुञ्जितमतीवाकर्षकं मोहकं
राकायां नटनागरस्य मधुरं वेणुस्वनं शृण्वती ।
गोपीभिः परिवेष्टितं मधुरिपुं वीचीभिरालिङ्गती
मन्ये प्रीतिमलौकिकीं निगदितुं गङ्गां समालिङ्गति ।।३३।।

गोपीनां विरहेण कातरहृदां याते हरौ द्वारिकां
नेत्राभ्यामनिशं जलं निपतितं सम्मिश्रितं कज्जलैः।

गोलोक में जो विरजा नदी की सखी थी, रासेश्वर कृष्ण प्रेमिका थी; वही पृथ्वी लोक में हरि की लीला को देखने के लिए अवतरित हुई यमुना के रूप में । श्रीकृष्ण के अंग से उत्पन्न श्वेत वर्ण वाली अपनी छोटी बहन गंगा को देखकर वह यमुना अनुराग से भरी हुई दौड़ कर उससे गले मिल रही है। अपने तट पर अत्याकर्षक वंशी की ध्वनि सुनती हुई, पूर्णिमा की रात्रि में गोपिकाओं से घिरे हुएं नटनागर को अपनी तरङ्गों से आलिङ्गत करती हुई सी लगती है।कृष्ण के द्वारिकाचले जाने पर विरह व्याकुल गोपियों के नेत्रों से निरन्तर गिरने वाले काजल मिश्रित शोकाश्रुओं से

The river which happened to be the close confidant of *Virajā* river and the beloved *of Rāśeśwar Kṛṣṇa*, descended upon the earth (*Pṛthivī loka*) to witness the ways of *Hari* in the form of *Yamunā*. She as if rushes lovingly further to embrace her sister *Gaṅgā* who has sprung out of *Śrī Kṛṣṇa*'s body. On the full moon night she as if listens to the enchanting music of flute played by *Nata nāgara Śrī Kṛṣṇa*, surrounded by *Gopīs* on her banks and enriches them with her waves. Long ago when *Kṛṣṇa* left for *Dwārikā* the *Gopīs* torn by the pangs of separation, shed tears ceaselessly. As tears blended with *kājal* touched the waters of

नीलाश्मद्युतिशालिनी नु यमुना सम्भिन्नशोकाश्रुभिः
श्यामां प्रीतिमलौकिकीं कथयितुं गङ्गां समालिङ्गति ।।३४।।

राधामाधवयोः सिताऽसितरुची नद्यावुभे सङ्गते
श्यामश्वेतविभामयौ हरिहरौ नूनं समासङ्गतौ ।
मन्ये स्फाटिकमिन्द्रनीलमहसा सङ्क्रान्तमेतत्पयः
धन्यं सङ्गमतीर्थमुत्तमगतिप्राप्तेः परं साधनम् ।।३५।।

श्वेतश्यामतरङ्गचामरमुभे समवीजयन्त्यौ शुभं
सार्थक्यं ननु तीर्थराजपदवीं ते सम्विधत्तः स्फुटम् ।
यत्राऽपूर्वसमन्वयो विविधतायामेकतायाश्चिरम्
धन्यं सङ्गमतीर्थमुत्तमगतिप्राप्तेः परं साधनम् ।।३६।।

जब यमुना जल मिला तो वह यमुना नीलम की कान्ति वाली होकर श्यामल हो गई और मानो उन गोपियों की अलौकिक प्रीति को कहने के लिए गंगा में मिल रही हैं। दोनों नदियां राधा और माधव की गौरश्याम कान्ति जैसी हो कर मिल रही हैं। अथवा क्या सफेद और श्यामल विभा से युक्त विष्णु और शङ्कर परस्पर मिल रहे है; अथवा दोनों का जल स्फटिक और नीलम का मिश्रण लग रहा है; यह संगमतीर्थ उत्तमगति प्रदायक श्रेष्ठसाधन होने से धन्य है। ये दोनों नदियां श्वेत श्याम चंवर डुलाती हुई प्रयाग के तीर्थराज पद को सार्थक कर रही हैं; यहां पर विविधता में एकता का अद्भुत समन्वय है।।३२-३६।।

*Yamunā*, the latter turned into the colour of sapphire. Today also she seems to be eagerly meeting *Gaṅgā* to narrate the divine love of the *Gopīs*. These twin rivers seem to unite bearing the bright and dark effulgence of *Rādhā* and *Mādhava*. Do these streams resplendent with black and white lustures remind us of the meeting of *Viṣṇu* and *Śiva*? Or does the confluence of these too distinct streams seem to be one of crystal and sapphire? This *saṅgam* is an outstanding *tīrtha* which liberates the creatures. These two rivers seem to sway the white and black fans (*chaṅvar*) and make the meaning of the term *tīrthrāja* worthwhile.[32-36]

वेदज्ञानमयः स्वरः समुदितः सत्कर्मज्ञानात्मको
द्वैताऽऽद्वैत-कृतान्तकान्तविशदो घोषः समुद्घुष्यते ।
कृष्णप्रेमतरङ्गिणी समरसा रामस्य भक्त्योर्मिभि-
र्धन्यं सङ्गमतीर्थमुत्तमगतिप्राप्तेः परं साधनम् ।।३७।।

गूजत्यत्र सनातनी मधुमयीयं देववाण्येकतो
भावैः संवलिताऽन्यतः सुकविता सा राष्ट्रभाषामयी।
स्वातन्त्र्याय चिरादनिद्रितवतीयं राष्ट्रिया चेतना
धन्यं सङ्गमतीर्थमुत्तमगतिप्राप्तेः परं साधनम् ।।३८।।

बौद्धानां करुणामयः शरणदः शब्दोऽप्यहिंसावतां
जैनानामुपकारिका मृदुतमा वाणी च शोश्रूयते ।
शिष्याणां गुरुगीर्मुहम्मदवचो धन्ध्वन्यतेऽहर्निशं
धन्यं सङ्गमतीर्थमुत्तमगतिप्राप्तेः परं साधनम् ।।३९।।

एक ओर वेद का ज्ञानमय स्वर सुनाई दे रहा है दूसरी ओर द्वैत-अद्वैत के सिद्धान्तों पर चर्चा हो रही है। कहीं कृष्ण भक्ति शाखा रामभक्ति शाखा के साथ मिल रही है। एक ओर सनातनी मधुर देववाणी संस्कृत बोली जा रही है और दूसरी ओर अनेक भावों से युक्त हिन्दी की सुन्दर कविता महादेवी, पन्त, निराला जैसे कवियों के कलकण्ठ से फूटी है और यहीं स्वतन्त्रता प्राप्ति के लिये जाग उठी राष्ट्रियचेतना का उन्मीलन हुआ। 'बुद्धं शरणं गच्छामि' का उद्घोष तथा अहिंसा वादी जैनों की कोमल वाणी, सिक्खों की गुरुवाणी और पैगम्बर मुहम्मद का वचन सभी का सङ्गम इस तीर्थ में है।।३७-३९।।

The *Vedic* recitals and the discourse on *Dvaita* and *Advaita* co-exist here. The devotees of *Kṛṣṇa* and the followers of *Rāma* interact peacefully. On the one hand, here the *Sanātanī Devavāṇī Sanskṛt* is being spoken with reverence, on the other, outstanding creativity in *Hindī* is also evident in the poems of *Mahādevī*, *Pant*, *Nirālā* and others. The confluence of the best thoughts of the Buddhist, the Jains, the Sikkhas and the followers of Paigambar Mohammad can be seen at *Prayāga*. [37-39]

दुर्गे यावननिर्मिते दृढतमे तीरस्थिते सुन्दरे
प्राचीनश्च विराजतेऽक्षयवटः सम्पूजनीयो महान् ।
कल्पान्तेऽस्य पवित्रपत्रपुटके शेते जलप्लावने
पादाङ्गुष्ठरसं स्वदन् प्रमुदितो बालो मुकुन्दः सदा ।।४०।।

क्षीराब्धेः प्रभवाद् विलक्षणघटात् ताक्ष्र्येन नीताद्दिवि
चत्वारः पतिताः सरित्सु विमले नीरे सुधाविन्दवः ।
श्रीसूर्ये मकरे गते वृषगते जीवे तपस्ये स्फुरन्
कुम्भोऽमातिथिसंयुतो निगदितो योगः प्रयागे शुभः[१४] ।।४१।।

कुम्भः पिण्ड इतीरयन्ति विबुधाः पूर्णोऽमृतेनात्मना
ब्रह्माण्डः परिचीयतेऽतिविपुलः कुम्भः प्रतीकेन च ।
तस्माद् विश्वसमग्रतामधिवहन् कुम्भः सदा पूज्यते
कुम्भश्चात्र सनातनः प्रचलितो दिव्यः समाजोत्सवः।।४२।।

यवन सुलतान अकबर द्वारा बनाये गये किले में प्राचीन, पूज्य, महान अक्षयवट भी विराजमान है; जिसके पवित्र पत्ते में प्रलय के समय बालमुकुन्द श्रीहरि पैर के अंगूठे को चूसते हुए सोते हैं। क्षीर सागर से उत्पन्न अलौकिक अमृत कुम्भ को गरुड़ आकाश में ले गये, वहां से अमृत की चार बूंदें नदियों में गिर पड़ी । जब सूर्य मकर राशि पर और वृहस्पति मेष राशि में आ जाते हैं तब आमावस्या तिथि में प्रयाग में कुम्भ का शुभ योग होता है। विद्वान् पिण्ड (शरीर)को कुम्भ कहते हैं जिस में अमर आत्मा का निवास है। कुम्भ सम्पूर्ण ब्रह्माण्ड का भी प्रतीक है। विश्वसमग्रता के

Here till today is found the ancient *Akṣaya- Vat* in the fort built up by the Mughal emperor Akbar. It is the same tree, on the holy leaf of which *Bāla-mukunda Hari* sleeps sucking his toe.According to *Purāṇa Garuḍa* took the *Amṛta kumbha* to the heavens from where four drops of nectar fell into four rivers. When the sun enters the zodiac sign of Capricorn (*Makara*)and the planet Jupiter stays in *Aries* (*Meṣa*) sign then on the *tithi* of *Amāvāsyā* the *kumbha parva* starts at *Prayāga*. The corporeal body is called *Kumbha* by great men. The immortal soul resides in it. *Kumbha* is the symbol of the entire universe. *Kumbha* as a festival has a great social implication as it underlines and stresses

नीलाङ्गी यमुनाजलेन सुभगा गङ्गा मनोहारिणी
गच्छन्ती तमसामवेक्ष्य पुरतः सम्मेलयत्युत्तमाम् ।
यस्या रोधसि कोकिलोऽतिमधुरैः शब्दैरभिव्यञ्जकैर्
वाल्मीकिस्तु चुकूज काव्यमतुलं रामायणं प्राञ्जलम् ।।४३।।

भस्मीकर्तुमशेष पाण्डवकुलं लाक्षा[१५] गृहं निर्मितं
यत्राऽनेन सुयोधनेन नितरां दुर्बुद्धिना लोभिना ।
तीरे तं भवनं विलोक्य सदया गङ्गा शुभं काङ्क्षती
तान् कुन्तीतनयान् तरङ्गबहुलैराशीर्भिरावर्धयत् ।।४४।।

इत्थं सा सततप्रवाहभरिता झङ्कारिणी हारिणी
विन्ध्याद्रिं समुपागमल्लहरिका कूले क्वणत्किङ्किणी ।

प्रतीक के रूप में यह कुम्भ पर्व सदा पूज्य है और कुम्भ सनातन काल से मनाया जाने वाला एक सामाजिक उत्सव भी है।।४०-४२।।

गोरी गङ्गा यमुना जल से मिल कर नीली हो गई और बड़ी सुन्दर लगने लगी है। आगे चल कर उन्होंने तमसा (टोंस) नदी को मिलाया। जिसके तट पर वाल्मीकि रूपी कोकिल ने मधुर तथा व्यंञ्जक शब्दों से प्राञ्जल रामायण महाकाव्य की रचना की । लाक्षागिरि स्थल पर सम्पूर्ण पाण्डव कुल को राख बना दिये जाने का षडयन्त्र जब दुर्बुद्धि और लोभी दुर्योधन बना रहा था;तब श्री गंगा अपने तट पर बनते उस भवन को देख, कुन्तीपुत्र पाण्डवों के शुभ की आकांक्षा करती हुई, उनको अपनी लहरों से आशीर्वाद देने लगी ।।४३-४४।।

इस प्रकार निरन्तर प्रवाह से भरी हुई, झङ्कार करने वाली,मनोहारिणी गङ्गा, तट

the concept of universal brotherhood.[40-42]

*Śrī Gaṅgā* has become bluish touching the water of *Yamunā* and looks exquisitely beautiful. Going further ahead She has joined with Her the river *Tamasā*. The great epic *Rāmāyaṇa* was composed by the renowned poet *Vālmīki* on the bank of this river.Then She reaches the *Lākṣāgiri*, where *Duryodhana* long ago had conspired to reduce the *Pāṇdavas* to ashes. *Gaṅgā's* waves flowing past the *Lākṣāgiri* blessed the sons of *Kuntī*.[43-44]

Flowing incessently and echoing melodious cadence *Gaṅgā*

कंसं नाशयितुं क्षितावतरितां मायां यशोदाङ्गजाम्
एतस्मिन्नचले स्थितां द्युतिमतीं विन्ध्येश्वरीमीक्षते ।।४५।।

दुर्गामष्टभुजां सुरैः प्रणतिभिः सन्तोषितां कालिकां
तीरस्थं चरणाद्रिदुर्गमतुलं दृष्ट्वा प्रहृष्टा सती ।
मन्दं झर्झरशिञ्जिनी सुमनसां हृत्पद्मकिञ्जल्किनी
गङ्गाऽनङ्गरिपोः पुरं जिगमिषत्यावर्तताटङ्किनी ।।४६।।

पर लहरोंरूपी कङ्गन से क्वणन करती हुई विन्ध्याचल आई, जहां वे कंस के बध के लिये पृथ्वी पर अवतरित योगमाया यशोदातनया को इस पर्वत पर स्थित विन्ध्यवासिनी के रूप में देखती हैं । अष्टभुजा दुर्गा, काली तथा अपने तट पर स्थित चरणाद्रि (चुनार) दुर्ग को देख कर प्रसन्न होती हैं । मन्द झर्झर रूनझुन करती हुई, पुण्यात्माओं के हृदय की पराग स्वरूपा, आावर्तरूपी ताटङ्क को धारण करने वाली गङ्गा कामारि शिव के पुर (काशी) में जाने की इच्छा करती हैं ।।४५-४६।।

has reached *Vindhyāchal*. It is the place where *Yoga māyā*, the incarnation in the form of *Vindhyeśwarī*, dotes upon the daughter of *Yaśodā* to uproot *Kaṁsa*. *Aṣṭabhujā Durgā*, *Kālī* and the Chunār Fort all come in Her perview, when She watches them while flowing. Then, as the musical journey of *Gaṅgā* continues, She desires to reach the city of *Kāmāri Śiva*, that is *Kāśī*.[45-46]



षष्ठः सर्गः

## काशी (वाराणसी ) वर्णनम्

डङ्कारं डमरोर्डमड्डुमदिति श्रोतुं जटानिर्झरी
द्रष्टुं वै नटराजताण्डवमहो ! सङ्गीतरत्नाकरी ।
तानं दातुमिवस्वकीयलहरीतन्त्रीझणत्कारिणी
गङ्गाऽनङ्गरिपोः पुरं प्रविशति ह्यावर्त्तताटङ्किनी ।।१।।

यावत्सा त्रिपुरारिराजनगरीसीमां समासादिता
तावन्मुग्धदृशा विलोकितवती श्रीशूलटङ्केश्वरम् ।
सानन्दं विपिने वसन्तमजिनव्यालावलीभूषितम्
गङ्गा स्तौति शुचिस्मिता मधुरया वाचा विधायाञ्जलिम् ।।२।।

डमरू की डम-डम ध्वनि को सुनने के लिए तथा नटराज के ताण्डव लास्य को देखने की इच्छा से, मानों अपनी लहरों के तन्त्री झंकार से नृत्य में तान देने के लिए जटाशङ्करी, सङ्गीत मर्मज्ञा आवर्त रूपी ताटङ्क धारण की हुई गङ्गा अनङ्गरिपु के पुर में प्रवेश करना चाहती हैं। जब वे त्रिपुरारि (शिव) की नगरी की सीमा के पास पहुंचती हैं तब मुग्ध दृष्टि से शूलटङ्केश्वर महादेव को देखती हैं। वन में आनन्द से निवास करने वाले, मृग चर्म और सर्पमाला से विभूषित उनकी स्तुति

**The Kāśī (Vārāṇasī) Vignette**

To enjoy the sound of the beats of *Damaru* and to watch the grace of *Naṭarāja*'s *Tāṇḍava* and to be an accompanist of this dance, playing the music of Her waves She, the connoisseur of music, wants to enter the city of *Anaṅga ripu*. The moment She touches the fringes of *Tripurāri Śiva*'s city, She is charmed to see *Śūla-Ṭaṅkeśwara Mahādeva*. *Gaṅgā* with Her pious smile sends

**श्रीगङ्गा प्राह**

जयति शूलटङ्केश्वरो हरः त्रिपुरनाशकस्त्र्यम्बकेश्वरः।
जयति विश्वनाथो महेश्वरो जयति शङ्करः काशिकेश्वरः ।।३।।
असितचर्मधारिन्! सितद्युते! भुजगभोगहारिन्! जगत्पते !
त्रिविधतापहारिन्! नमोऽस्तु ते! भवभयापहारिन्! नमो नमः ।।४।।
सुमनस्स्रग्विणे! सौख्यकारिणे! तिलकधारिणे! पुण्यशालिने!
दुरितवारिणे ते पिनाकिने चिदनुरागिणे ज्ञानरूपिणे।।५।।
अचलशायिने श्रीप्रदायिने गरलपायिने मुक्तिदायिने।
प्रणतपालिने ते कपालिने मदनवैरिणे शूलिने नमः।।६।।

पवित्र मुसकान वाली गङ्गा हाथ जोड़ कर इस प्रकार करती हैं ।।१-२।।

गङ्गा कहती हैं-शूलटङ्केश्वर ,हर, त्रिपुर नाशक, त्र्यम्बकेश्वर, विश्वनाथ, महेश्वर, शङ्कर, और काशी के अधिपति की जय हो। काले चर्म को धारण करने वाले, शुभ्रकान्ति वाले , सांपों के हार वाले, जगत्पति, तीनों तापों को हरने वाले, भव भय को हरने वाले आपको नमस्कार है। फूलों की माला धारण करने वाले, सुख प्रदान करने वाले, पुण्यशाली, तिलकधारी, पापों के निवारक, पिनाक धारी, चैतन्यानुरागी, ज्ञानस्वरूप; पर्वत पर सोने वाले, शोभा प्रदान करने वाले, विषपान करने वाले, मुक्ति प्रदान करने वाले, प्रणत का पालन करने वाले, कपाल धारी, कामदेव के वैरी, त्रिशूलधारी को नमस्कार है। ॐ के स्वरूप,

Her prayers with folded hands to Śiva, the dweller in the woods who puts on the skin of lion and the ornament of snakes.[1-2]

*Gaṅgā* exhorts *Śaṅkar*, the Lord of *Kāśī* with thousand names. She says,"Glory be to *Śūla Taṅkeśwara, Kāśikeśwara*! I salute you who wears the skin of black deer. You are the one who is fair-skinned and dons snakes as garlands.You are the master of the universe, who removes the agony of three types. I bow to you; the dispeller of the fear of rebirth in the world." She chants the different names of *Śiva* in deep reverence counting His manifold attributes thus, " You wear the garland of flowers, you are the bestower of joy, destroyer of sins, you hold the *Pinaka*, you are the symbol of knowledge. The mountains are your bed and your drink is poison. You are the liberator of mortals,

मर्त्यः त्वच्छरणागतो भवभयोच्छेदं प्रकुर्वन्सदा-
ऽमर्त्यः सँल्लभतेऽपुनर्भवपदं शोकातिगो मोदते ।।१०८।।
उत्सङ्गे तव पावने लहरयो मे यावदासादिताः
तावत्ते प्रभया भवन्ति सुतरां देदीप्यमानाः सदा ।
छेत्तुं वै निगडं क्षुरस्य निशिता धारा भवन्त्योऽमला
मोक्षद्वारविमोचनेऽतिपटुतां सम्प्राप्य संशोभिताः ।।१०९।।
प्रान्ते ते मणिकर्णिके! तनुभृतामावर्तनोच्छेदकं
मन्त्रं तारकमुत्तमं पशुपतिर्यावन्न सञ्जल्पति ।
तावत्कालमसङ्ख्यभैरवगणैः सन्तप्यमानं जनं
मातां त्वं करुणामयी सुतरलैः स्नेहाम्बुभिः सिञ्चसि ।।११०।।
चक्रेणोत्खनिता[२१] विभाति निकटे स्नानाय मोक्षार्थिनां
पुण्या पुष्करिणी पुराऽतिविमला संसारचक्रापहा ।

प्रिय लगने वाली, तीर्थरूप हे मणिकर्णिका ! तुम धन्य हो । मरण धर्मा जीव तुम्हारी शरण में आकर भव भय का उच्छेद करता हुआ अमर होकर मोक्ष को प्राप्त करता है और शोक रहित हो जाता है। जब तुम्हारी पवित्र गोद में मेरी लहरें पहुंचती हैं तब वे तुम्हारी प्रभा से देदीप्यमान होकर छुरे की धार के समान तीखी हो जाती हैं और मोक्ष के द्वार को खोलने में निपुणता को प्राप्त कर लेती हैं। जब तक तुम्हारे तट पर पशुपति तारक मन्त्र कान में नहीं फूंकते तब तक भैरव गणों द्वारा सताये गये जीव को तुम करुणामयी माता अपने स्नेहजल से सींचती हो; तुम्हारे निकट ही चक्र पुष्करिणी शोभायमान है, जो भगवान् विष्णु के चक्र से खनी

three *lokas*. You are desired by *Śiva* O you pilgrimage incarnate *Maṇikarṇikā*! blessed are you. The mortal being under your shelter forgets the fear of rebirth and attains *Mokśa* by becoming immortal. One becomes free from grief. When my waves touch you they become sharp as razor's edge by absorbing your brilliance and thus become proficient to open the gate-way to liberation. You nourish the *Jīva* with your water like a compassionate mother till *Paśupati* whispers the *Tāraka Mantra* into their ears. Quite near lies the *Chakra-Puṣkaraṇī* pond which

दृष्ट्वाऽहं मणिकर्णिकेश्वरमिहाऽधःस्थं तृतीये तले
आशासे भगवान् स नूनमखिलान् दोषान् व्यपोहेन्मम ।।१११।।
अन्ये चापि पवित्रतीर्थनिवहा धर्मस्य संस्थापका
मत्तीरे किल सन्ति सुन्दरतमाः स्वर्गादिलोकप्रदाः ।
किन्त्वस्माद् मणिकर्णिकास्नपनजादुत्कृष्टपुण्यात्मकात्[३०]
प्रज्ञानात् पुनरागमेन रहितां मुक्तिं लभन्ते नराः ।।११२।।
मुक्तिमन्त्रो महेशेन कर्णे यथा
श्राव्यतेऽत्रैव तीर्थे परं पावने ।
राजते भूतनाथेन सार्धं तथा
तारिणी तर्पयन्ती जनानम्भसा ।।११३।।

गई है और संसार रूपी चक्र को नष्ट करने वाली है; मोक्षार्थी इसमें स्नान करते हैं। यहीं पर नीचे की तीसरी मंजिल में मणिकर्णिकेश्वर विराजमान हैं, जिन्हें देखकर मैं आशा करती हूँ कि वे कभी प्रदूषणों से मेरा उद्धार करेंगे। अन्य पवित्र तीर्थ भी मेरे तट पर धर्म की स्थापना करते हुए स्वर्गादि लोकों को देने के लिए स्थित हैं; किन्तु मणिकर्णिका तीर्थ में स्नान करने से उत्पन्न पुण्य रूप प्रज्ञान से जीव आवागमन से रहित परम मुक्ति को प्राप्त कर लेता है।।१०८-११२।।

इसी पवित्र तीर्थ में महेश जीव के कान में मुक्ति दायक मन्त्र सुनाते हैं और श्रीगङ्गा जल से उनका तर्पण करती हुई भूतनाथ के साथ सुशोभित होती हैं।

had been dug by the wheel of *Viṣṇu*, and is capable of destroying the cycle of mortal births. Those who crave for liberation bathe in it. Here as *Maṇikarṇikeśwara* resides at the third storey built underground I (*Gaṅgā*) hopefully think to be redeemed by Him from pollution. Other pious pilgrimages (*Tīrthas*) are also there along my bank to establish *Dharma* and grant *Swarga Loka* etc. but bathing at *Maṇikarṇikā tīrtha* engenders that kind of enlightnment which enables *Jīva* to be totally liberated.[108-112]

At this holy *tīrtha Maheśa* chanted the liberating *mantra* into the ears of *Jīva*, *Śrī Gaṅgā*, offered libation of water to him and dwelled with *Bhūtnātha*. At *Gaṇeśa-ghāt* she looks at the *Śamī*

अग्निगर्भं शमीवृक्षमालोकते[३१]
यज्ञसम्पादकं पावनं सुन्दरम् ।
अत्र वैनायकं विग्रहं सुन्दरं
पाययन्ती पयोऽग्रेसरा वत्सला ।।११४।।
दक्षिणाऽऽशामभिप्रेक्षमाणं वरं
सा यमाऽऽदित्यमत्यन्ततेजस्विनम् ।
सङ्कटां सङ्कटाऽऽपायकर्त्रीमपि
द्रष्टुकामाऽऽथ घट्टं समासादिता ।।११५।।
अत्र रामेश्वरं रामघट्टे स्थितं
पूजयन्त्यूर्मिभिर्दृश्यते सर्वदा ।
पश्यति प्राणदात्री चिकित्सालयं[३२]
स्थापितं साम्प्रतं रोगसंहारकम् ।।११६।।
धूतपापादि-पञ्चापगाः पुण्यदाः
सङ्गता यत्र चान्तः प्रवाहाः शुभाः ।
पावनं पञ्चगङ्गातटं[३३] प्राप्य सा
राजते गाङ्गधारा सिता शीतला ।।११७।।

गणेशघाट में यज्ञ के सम्पादक शमी वृक्ष को देखती हैं, वहां सुन्दर गणेश जी की मूर्ति को जल पिलाती हुई बढ़ती हैं। यमघाट में दक्षिण दिशा की ओर देखते हुए यमादित्य को देखती हुई, संकठाजी को देखने के लिए बढ़ती हैं। रामघाट में स्थित रामेश्वर को प्रणाम करती हुई वर्तमान में निर्मित चिकित्सालय को भी देखती हैं। यहाँ से धूतपापा, किरणा, गङ्गा, जमुना, सरस्वती पांच धाराओं का संगम स्थल पञ्चगंगा घाट पहुंचती हैं।।११३-११७।।

tree which is used to accomplish *yajña* and proceeds ahead after pouring water on the idol of *Ganeśa.* At *Yama-ghāt* She locates *Yamāditya* facing south, and moves on to see *Saṅkatā Devi.* At *Rāma-ghāt* She bows to *Rāmeśwara* and also takes note of the recently built hospital. Then She reaches *Pañchagaṅgā-ghāt*, the confluence of five rivers, i.e. *Dhūtpāpā, Kiraṇā, Gaṅgā, Yamunā* and *Saraswatī.*[113-117]

सुकृतिभिरिह पौरैः कार्तिके स्नानशीलैर्
व्रतनियमविशुद्धैः सज्जिताऽऽकाशदीपैः।
द्युतिभिरमितहृद्या देवदीपावलीनां
बहुतरलतरङ्गाऽऽनन्दिता भाति गङ्गा ।।११८।।
विहगकुलरुतानां मञ्जुझङ्काररूपं
सुरयुवतिपदानां शिञ्जनं शृण्वतीव ।
शशिनि समुदिते खे सर्वतः सुप्रकाशा
विकचकुमुदहासा शोभते सान्ध्यवेला।।११९।।
विलसति दिवसान्तेऽस्तङ्गते तिग्मरश्मा-
वरुणिमवसनेयं ग्राम्यबालेव रम्या ।
कनकरुचिरदीप्तैस्तारिका पुष्पपुञ्जै-
रुपजनयति शोभां स्वर्धुनीमर्चयन्ती ।।१२०।।

यहां पर स्नान करने वाले पुण्यात्माओं द्वारा कार्तिकमास में व्रत और नियम करने वाले नागरिक जब गङ्गा को आकाश दीप अर्पित करते हैं तब दीपावली के प्रकाश से जगमगाती हुई तरलतरंगों वाली गङ्गा अत्यन्त सुन्दर लगती हैं। पक्षियों कें कलरवों की झंकार से देव वनिताओं के पैरों की रुनझुन सुनती हुई, चन्द्रमा के उदित हो जाने पर प्रकाशमयी, खिले कुमुदों से हंसने वाली सन्ध्या सुशोभित होती है। दिन के अन्त में वह सूर्य के अस्त हो जाने पर लाल वर्णा सन्ध्या ग्राम्य बाला सी मनोरम लगती है । सुनहले दीपकों से तथा तारों के फूलों से स्वर्धुनी की पूजा करती हुई संध्या सुशोभित होती हैं। अमावास्या की रात्रि में घने अन्धकार रूपी ओढ़नी ओढ़ी हुई, अपनी लहरों में सुशोभित छोटे-छोटे दीपों का स्वागत करती

*Gaṅgā* glitters dazzlingly and appears to be exquisitely captivating with Her lucid waves when pious and righteous bathers light and offer *Ākāśa-dīpa* during the month of *Kārttika*. *Sandhyā* smiles enchantingly as she listens to the sonorous melody of the chirping of birds which remind her of the music of the tinkle of the anklets of divine damsels. She turns dazzling with the rise of the moon and derives her laughter from the blooming lilies. At the end of the day with sunset, the roseate *Sandhyā* looks as charming as a village belle. She seems to be

घनतिमिरदुकूलां रात्रिदेवीममायां
लहरिषु लघुदीपैः स्वागतोक्तिं वदन्ती।
पुरजनहृदयेषु स्नेहसञ्चारशीला
बहुतरलतरङ्गाऽऽनन्दिता भाति गङ्गा ।।१२१।।

ज्योतिष्पुञ्जैर्नभसि लसिता स्वर्गमन्दाकिनी किं
काश्यामस्यां रुचिररुचिभिर्भासमानाऽवतीर्णा ?
घट्टे-घट्टे मणिरिव समालङ्कृता दीप्यमाना
दीपावल्यो नयनसुभगाः पूर्णिमायां विभान्ति ।।१२२।।

अत्र सोपानपङ्क्तौस्थितः शास्त्रवित्
पण्डितेन्द्रो जगन्नाथनामा कविः ।
आजुहावाऽऽर्तचित्तः परां मुक्तिदां
यावनीप्रेमबद्धः प्रवादैर्हतः [३४] ।।१२३।।

आददानाऽतिवेगेन याताऽग्रगा
लोकनिन्दाकुलं पुत्रमूर्म्यञ्चले ।

हुई, नागरिकों के हृदयों में स्नेह का संचार करती हुई, तरल तरंगों वाली गङ्गा अत्यन्त आनन्दित होती है।।११८-१२२।।

इसी घाट में शास्त्रवेत्ता श्रेष्ठ कवि पं. राजजगन्नाथ ने यवन कन्या से प्रेम करने के कारण लोक निन्दित होकर परा मुक्ति दायिनी गङ्गा को दुःखी हृदय से बुलाया था। यहीं पर लोकनिन्दा से व्याकुल पुत्र को अपने लहरों के आंचल में छिपाकर वे बड़ी तेजी से आगे बढ़ी, जिनकी 'गङ्गा लहरी' की काव्य धारा जलधारा के साथ

offering her oblations to *Gaṅgā* in the form of stars which look as beautiful as flowers and lamps which bear golden hue. On the night of new moon *Gaṅgā* wrapping round the cover of darkness along with Her dancing waves appreciates the little lamps adorning Her waves. *Gaṅgā* with Her pulse of ripples generates affection in the hearts of the citizens.[118-122]

The great scholar and poet *Paṇḍita*rāja *Jagannātha*, who on being censured by the society for his affection for a muslim girl had hailed *Gaṅgā*, the emancipator in deep affliction. The latter (*Gaṅgā*) hid Her out caste son within the folds of Her waves

यस्य गङ्गालहर्यो लहर्योऽभवन्
काव्यधाराऽम्बुधाराभिरेकीकृताः ।।१२४।।
पञ्चगङ्गेश्वरं गौरीं मङ्गलां लोकमङ्गलाम् ।
मयूखादित्यचक्रञ्च, बिन्दुमाधवमीक्षते ।।१२५।।
प्रागासीत् पावनं यत्तु बिन्दुमाधवमन्दिरम्
यवनोपासनास्थानं दृश्यतेऽत्युन्नतं च तत् ।।१२६।।
योगसिद्धं सुविख्यातं तैलङ्गस्वामिनं पुरा ।
स्नापयन्ती सुधाम्भोभिः शोभिता भक्तवत्सला[३५] ।।१२७।।

दीक्षाप्राप्तिसमीहया शुचिमतिः निष्ठायुतः साधकः
सोपाने शयनञ्चकार विमले प्रत्यूषकाले शुभे ।
रामानन्दगुरोर्मुखादिह तदा रामेति यन्निःसृतं
मन्त्रत्वेन तदाददे मृदुवचो दासः कबीरो महान्[३६] ।।१२८।।

एकाकार हो गई।।१२३-१२४।।

यहां पर पञ्चगंगेश्वर, मंगला गौरी, मयूखादित्य, विन्दुमाधव मन्दिर को देखती है; जहां पहले विन्दुमाधव मन्दिर था वहां नगर के सबसे ऊंची मस्जिद (माधवराव का धरहरा) दिखाई देता है। यहीं पर योगसिद्ध तैलंगस्वामी निवास करते थे। उन्हें अपने अमृत जल से स्नान कराती हुई भक्तवत्सला गङ्गा सुशोभित हुईं।।१२५-१२७।।

इसी घाट की सीढ़ियों पर दीक्षा प्राप्ति की इच्छा से पवित्र बुद्धि वाले, निष्ठावान् साधक कबीर दास भोर वेला में लेट गये; जब उन पर पैर पड़ जाने से श्री रामानन्द

and rushed along. The poetic stream of *Gaṅgā-Laharī* and the stream of the river became one at that moment.[123-124]

She flows past *Pañchagaṅgeśwara*, *Maṅgalā Gaurī*, *Mayūkhāditya* and *Vindu-Mādhava* temples. The place where once the temple of *Vindu-Mādhava* was situated, one finds the tallest mosque, i.e. *Mādhava Rao*'s *Dharharā*. The great *Yogī Tailaṅga Swāmī* lived here and *Gaṅgā* seems to have bathed him with Her deathless water.[125-127]

The virtuous devotee *Kabīrdāsa*, a being with pure intellect, desirous of receiving *Dīkṣā* lay prostrate on the steps of

दुर्गां द्वितीयामवलोक्य देवीं
मन्दाकिनी-भैरव-मध्यमेशम् ।
मत्स्योदरीकुण्डमिहप्रदुष्टं[३७]
दृष्ट्वातिखिन्ना परिलक्ष्यमाणा ।।१२९।।
खखोल्कमादित्यमपीक्षमाणा
त्रिलोचनेशं पुरतो नमन्ती ।
गोघट्टमागत्य शनैः-शनैः सा
प्रह्लादघट्टं समुपैति गङ्गा ।।१३०।।
ओङ्कार-कालेश्वर-भूतभारा-
द्यनेकलिङ्गानि समर्चयन्ती।
वीचीविलासैः प्रवहन्त्यशेषा
विराजतेऽसौ खलु राजघट्टे ।।१३१।।

गुरु के मुख से सहसा राम शब्द निकला तो उसी को उन्होंने मन्त्र दीक्षा के रूप से ग्रहण किया।।१२८।।

गङ्गा ब्रह्मचारिणी दुर्गा को देखते हुए, मन्दाकिनी, कालभैरव और मध्यमेश्वर का दर्शन करते हुए जब आज मछोदरी कुण्ड की दुर्दशा को देखती हैं तो बहुत दुःखी होती हैं। उसके बाद खखोल्कादित्य, त्रिलोचन महादेव को प्रणाम करती हुई गायघाट, तथा प्रह्लाद घाट जाती हैं। तत्पश्चात् ओंकारेश्वर, कालेश्वर, भूतभारेश्वर आदि अनेक शिवलिङ्गों का दर्शन करती हुई राजघाट में सुशोभित होती हैं। यहां पर

this very *ghāt* at day break. He accepted the word *Rāma* as *Dīkṣā Mantra*, which came out of *Rāmānanda's* mouth accidentally.[128]

*Gaṅgā* flows getting a glimpse of *Brahmachāriṇī Durgā*, *Mandākinī*, *Kāla-bhairava* and *Madhyameśwara* and when She witnesses the wretched condition of the present day *Matsyodari Kuṇḍ*, She turns deeply anguished. On Her way to *Gāya-ghāt* and *Prahlāda-ghāt* She bows down to *Khakholkhāditya* and *Trilochan Mahādeva*. She reaches *Rāja-ghāt* after visiting *Oṁkāreśwara*, *Kāleśwara*, *Bhūta-bhāreśwara* and many other *Śiva*

बेसेन्टदेव्या परिकल्प्यमानं
यशःस्वरूपं खलु कृष्णमूर्तेः ।
विद्यालयं पश्यति कन्यकानां
तीरस्थितं नूतननिर्मितञ्च ॥१३२॥

विलोक्य गांधीस्मृतिचिह्नरूपं
संस्थानमत्राऽऽकुलितेति मत्त्वा ।
स्वतन्त्रतायै परिचिन्तयन्तं
समाद्रियन्ते किमु भारतीयाः? ॥१३३॥

आदित्यमूर्तिमपरां सुविराजमानाम्
अत्राऽऽदिकेशवमपीक्षितुमुत्सुका सा ।
पादोदकं परमपावनतीर्थमेतत्
दृष्ट्वा पुराऽतिमुमुदे न पुनस्त्विदानीम् ॥१३४॥

दृष्ट्वा पुरा सुमिलितां वरणां वरेण्यां
स्वीयामितोऽसिमिव शोभितशुभ्रधाराम् ।

एनी बेसेन्ट की कल्पना और जेदद् कृष्ण मूर्ति द्वारा नव निर्मित वसन्त महिला महाविद्यालय को अपने तट पर स्थित देखती हैं। यहीं गांधी संस्थान को स्मृति-चिह्न के रूप में देखती हुई सोचती हैं कि स्वतन्त्रता के लिए सोचने वाले उस महात्मा का क्या भारतीय आज उचित आदर कर रहें हैं? यहीं पर आदि केशव घाट में केशवादित्य तथा केशव को देखने के लिए वे उत्सुक हैं। पहले इस विष्णुपादोदक तीर्थ को देखकर गङ्गा परम प्रसन्न होती थीं किन्तु आज कल नहीं । पहले यहां पर श्रेष्ठ वरणा को मिलते देखकर और यहां से तलवार की धार सी लगती अपनी धारा

*liṅgas*. She finds Vasanta college for women, the dream of Annie Besent, built anew by J.Kṛṣṇamūrti on Her own bank. Close by looking at the Gandhian Institute, She wonders whether the people of India now pay true homage to him (*Gāndhi)*, who struggled for the freedom of the motherland. She seems eager to see *Keśavāditya* and *Keśava* at *Ādikeśava-ghāt*. Long ago She became delighted to see this *Viṣṇupādodaka-tīrtha*, but She is not happy now. In the past She was elated to see the grand *Varaṇā*

वाराणसीति किल पाणिनिना यदुक्तं[३८]
सार्थं शृणोति पुरनाम तदेव नित्यम् ।।१३५।।
किन्त्वद्य पङ्कनिचयैर्हि विलुप्तकायां
तां सङ्गमेऽतिविकृतिं सततं नयन्तीम् ।
दृष्ट्वा भृशं शपति भोगविलासमग्नान्
तान् साक्षरान् दनुजभावगतान् नरान् हा ! ।।१३६।।

गङ्गासागरतीर्थमस्ति वरणायाः सङ्गमो विश्रुतः[३९]
स्नात्वा यत्र नरः क्वचिन्न जननीगर्भं प्रयाति ध्रुवम्[४०] ।
तं त्वेवं विकृतं प्रदूषणकरं हा ! हन्त ! गंगाऽनिशं
दर्श-दर्शमनुक्षणं प्ररुदतीवालक्ष्यते नो जनैः ? ।।१३७।।

पञ्चक्रोशपरिक्रमाक्रममनुप्राप्ते शिवस्यालये
तीरात्तं वृषभध्वजं च कपिलां धारां नमन्ती मुदा ।

को देखकर वह इस नगरी का सार्थक नाम वाराणसी को सुनती थी। किन्तु इस समय कीचड़ से भरी लुप्त शरीर वाली, संगम स्थल में गन्दगी फैलाती वरणा को देखकर श्रीगङ्गा आज के भोग विलास मग्न साक्षर राक्षसों को बार-बार शाप देती है। वरणा-गङ्गा संगम गंगासागर तीर्थ है, जहां स्नान करके मनुष्य माता के गर्भ में पुनः प्रवेश नहीं करता । उसको रात-दिन प्रदूषित देख-देखकर क्या गङ्गा मानवों को रोती हुई सी नहीं लगती? पञ्चक्रोशी की परिक्रमा के क्रम में प्राप्त कपिल धारा में वृषध्वज को प्रणाम करती हुई सारंगेश (सारनाथ) को दूर से प्रणाम कर , बुद्ध

meeting with Her own razor sharp stream from here.The meaningful name *Vārāṇasī* has originated from this very union. But at present *Gaṅgā* curses the accute materialism of the so called literate people for having led *Varaṇā* to her terribly abject and decimated state. The union of *Varaṇā* and *Gaṅgā* is *Gaṅgā-Sāgar-Tīrtha*, by bathing where one is liberated from the cycle of rebirth. Doesn't *Gaṅgā* seem to be wailing to see it (that *Varaṇā Saṅgama*) getting polluted day by day? She salutes *Bṛṣabhadhwaja* at *Kapila*

सारङ्गेशमपि प्रणम्य सुचिरं सा दूरतः श्रावणे
बुद्धस्य स्मरति श्रुतं प्रवचनं कारुण्यपूर्णं सदा ।।१३८।।

मार्कण्डेयमहेश्वरं प्रणतिभिः सन्तोषयन्ती चिरं
सङ्गन्तुं समुपागतां सुललितां तां गोमतीं पश्यति।
नीत्वेमां जमदग्निनार्चितभुवं सम्प्लावयन्ती मुहुः
ग्रामाद् ग्राममगात् तरङ्गबहुला गङ्गा पवित्राऽऽपगा ।।१३९।।

के करुणामय उपदेशों को भी सुनती है तथा मार्कण्डेय महेश्वर को नमन कर, मिलने के लिए आई गोमती को साथ लेकर जमदग्नि (जमानियां) की भूमि को सींचती हुई, एक गाँव से दूसरे गाँव में पवित्र नदी गङ्गा बह रहीं हैं।।१२९-१३९।।

*Dhārā*, traversing the way of *Pañchakrośī* and then from a distance pays Her tribute to *Sāraṅgeśa* (*Sāranātha*) and listens to the *Buddha's* message of compassion. She bows to *Mārkaṇḍeya Maheśwara* and then accompanies *Gomatī* to irrigate the land of *Jamadagni* (*Jamānia*).Thus the pure river treads from one village to the other. [129-139]



## सप्तमः सर्गः
## विहार-वर्णनम्

सा प्रयाताऽथ पुण्यप्रदा मङ्गला

पत्तनं गाधिराजस्य[1] सम्प्लावितुम् ।

तत्र गङ्गामुपेत्याऽमृतां पावनीं

धन्यतामेति गङ्गी सरिन्निर्मला ।।१।।

आत्मसात् कुर्वती शोभतेऽमङ्गलां

कर्मनाशामपीयं महौजस्विनी ।

गौतमेनाऽभिशप्ता शिलारूपिणी

राघवेणोद्धृताऽऽसीदहिल्या यथा ।।२।।

वन्यसम्पत्तिभिर्भूयशः श्यामला

शस्यपूर्णा समृद्धा विहारस्थली ।

पुण्यप्रदा मङ्गला गङ्गा अब आ गईं गाधि राज के जिले (गाजीपुर) में ; वहां गङ्गी नाम की छोटी नदी गङ्गा में मिल कर अपने को धन्य समझती है। यह महान् ओजस्विनी गंगा अमङ्गलकारिणी कर्मनाशा को भी अपने में मिलाकर उसी प्रकार पवित्र कर देती है जैसे गौतम के शाप से शिला बनी अहिल्या का उद्धार राघव ने किया था। यहाँ वह वन सम्पदा से हरे भरे, फसलों से लहलहाते , धन-धान्य से

**The Bihar Vignette**

The benefactor *Gaṅgā* now reaches the place of *Gādhirāja* (Gazipur district) to irrigate it. The little river *Gaṅgī* feels herself honoured to join *Gaṅgā*. This brilliant river *Gaṅgā* redeems the inauspicious river *Karmanāśā* as *Rāghava* (*Śrī Rāma*) had retrieved the ossified *Ahilyā* long ago. *Gaṅgā* surveys the entire

य: सरिन्मालया भूषित: सुन्दरो-
ऽसौ विहारप्रदेशोऽनयाऽऽलोक्यते ।।३।।
अग्निवर्णै: पलाशै: समासज्जितं
काननं यत्र नाना प्रसूनैर्वृतम् ।
उर्वरत्वं दधाना धरा शोभते
तं विहारप्रदेशं प्रविष्टा मुदा ।।४।।
यत्र बोधेन बुद्धोऽभवद् गौतम:
जन्म लेभे महावीरतीर्थङ्कर: ।
यत्र भूपा बभूवु: प्रतापान्विता:
तं विहारप्रदेशं प्रविष्टा मुदा ।।५।।
मागधीं कोशलां लिच्छिवीं मैथिलीं
राज्यकीर्तिं ददर्शोन्नतामेकत: ।
अन्यतो हा ! निपातस्तु कष्टप्रद:
किन्न कालक्रमेणाऽत्र दृष्टस्तया ।।६।।

समृद्ध, नदियों की माला से सुशोभित विहार-प्रदेश को देखती है। आग के समान पलाश पुष्पों से सुशोभित जंगलों वाले तथा विविध पुष्पों से भरे, उर्वरता को धारण की हुई पृथ्वी में गङ्गा ने प्रसन्नता से प्रवेश किया। जहां ज्ञान प्राप्त होने से गौतम बुद्ध हो गये, जहां महावीर तीर्थङ्कर ने जन्म लिया, जहां अनेक प्रतापी राजाओं ने राज्य किया, उस विहार में गङ्गा का आगमन हुआ। मगध, कोशल, लिच्छिवी और मिथिला के राज्यों की उन्नत कीर्ति को उसने एक ओर देखा और दूसरी ओर काल

province of Bihar which abounds in greenery and vegetation and overflows with crops. It is prosperous and adorned with the garlands of rivers. *Gaṅgā* joyfully enters the fertile land of flowering forests of *Palāśa* and blooming flora. *Gaṅgā* comes to that Bihar where *Gautam* became *Buddha*, the enlightened one, where *Mahāvīra Tīrthaṅkara* was born, where numerous kings of valour ruled. In the past She on the one hand witnessed the rise of the kingdoms of *Magadha, Kauśala, Lichhivi* and *Mithilā* and on the other their sad and inevitable fall in the course of time. At

उन्नतिस्तावदौद्योगिकी साम्प्रतं
कार्यतेऽहर्निशं यत्र वैज्ञानिकी ।
वैभवाङ्लङ्कृतिः सर्वतो दृश्यते
तं विहारप्रदेशं गता क्षिप्रगा ।।७।।
वेदगर्भा [२] पुरीमीक्षमाणा पुनः
चिन्तयत्यद्भुतं वैदिकं गौरवम् ।
मन्त्रपूर्वं कृतं यज्ञहोमादिकं
यत्र दृष्टं तया दीर्घकालावधिम् ।।८।।
अस्त्रशस्त्रैर्युता योद्धुमत्रागता
सा तपोविघ्नकर्त्री प्रचण्डाकृतिः ।
दीर्घदंष्ट्रा कराला महाराविणी
कम्पयन्ती मुनीनां मनः कोमलम् ।।९।।
अट्टहासेन शान्तिं निराकुर्वती
भीमकाया महाराक्षसी ताडका ।

क्रम से कष्ट प्रद पतन को भी देखा। आज कल विहार में जो औद्योगिक और वैज्ञानिक उन्नति हो रही है उस वैभव से युक्त प्रदेश को भी वे देख रही हैं। वेदगर्भा पुरी (बक्सर) को देखते हुए वह यहां की प्राचीन वैदिक उन्नति को देखती रही है, जहां बहुत दिनों तक यज्ञ होमादि अनुष्ठान होते थे। यहीं पर अस्त्र-शस्त्रों से सुसज्जित, तप की विघ्नरूपा, भयङ्कर आकृति वाली, तीखे दांतों वाली, घोर शब्द वाली ताड़िका मुनियों के कोमल मन को कम्पित करती थी, अट्टहास से शान्ति भङ्ग करने वाली, भयङ्कर शरीर वाली राक्षसी राम-लक्ष्मण को बालक समझकर उनके

present She keenly notes the developments in the fields of technology and industry in this flourishing state. At Buxar (*Vedagarbhāpurī*), the remnants of the ancient *Vedic* culture are appreciated by Her. The place was celebrated for the *yajñas* performed there but *Taḍikā* was there to disturb *Tapas* with her terrible appearance, sharp pointed teeth and clamour. She terrified the soft-hearted sages. This *Taḍikā*, who destroyed the *yajñas* with Her uproarious laughter tried to slay *Rāma* and

मन्यमानाऽऽसुपा बालकौ राघवौ
स्वर्गलोकं गता रामबाणैर्हता[3] ।।१०।।

आङ्ग्लसेनानिभिश्चोदितं भीषणं
चात्र युद्धं प्रचण्डं समावर्तत ।
यावनः शासको निर्जितः सर्वथा
बद्धमूलं कृतं 'कम्पनी'-शासनम्[4] ।।११।।
तीव्रभेरीनिनादैर्नभः पूरितं
सैन्यपाद-प्रहारैर्धरा कम्पिता ।
चन्द्रहासप्रघट्टैः समारेभिरे
शत्रुपक्षेऽपघातं भटा दर्पिताः ।।१२।।
वह्निविक्षेपकाद् निर्गतैर् गोलकैः
तैर्भुसुण्ड्यादिभिः पातिताः सैनिकाः ।
रञ्जिता रक्तपातेन सर्वा मही
सङ्गरे च्छिन्न-भिन्नाङ्गदेहा नराः ।।१३।।

प्राणों को पीना चाहती थी, किन्तु राम के वाण से मारी गई और स्वर्गलोक चली गई।।१-१०।।

यहीं पर अंग्रेज सेनापतियों ने युद्ध में यवन शासक को जीत कर कम्पनी शासन की जड़ें जमा लीं; उस समय तीव्र भेरी नाद से आकाश गुञ्जित हो गया, सैनिकों के पदचापों से पृथ्वी कांपने लगी। तलवारों की टकराहट से सैनिक शत्रुपक्ष में प्रहार करने लगे। तोपों से आग के गोले बरसने लगे, बन्दूकों से गोली खा कर सैनिक

*Lakṣmaṇa*, taking them to be kids. But she was killed by *Rāma* and thereafter went to *Swarga*.[1-10]

Here itself years ago the British soldiers defeated the Mughal rulers and strengthened the roots of the rule of the East India Company. At that time the sky echoed with the clarion call of trumpets and the earth shook under the foot-steps of marching soldiers. The native soilders struck the British. The cannon shots emitted fire and the wounded soldiers fell on the ground. The

सर्वतस्तीव्रकोलाहलाऽऽतङ्किता
क्रन्दनैश्चापि हा-हाकृतैराकुला ।
स्वाम्भसि त्यक्तदेहान् भटान् मज्जितान्
ईक्षती विव्यथे वत्सला कोमला ।।१४।।
सम्प्रदानं बलेर्वामनायाऽद्भुतं
यत्र सम्पादितं विश्वरूपात्मने ।
प्रापिता तद्बलेः पुण्यकीर्तिस्थलं
साक्षिणी चेतिहासस्य सा सर्वदा ।।१५।।
वामनोऽयं विराडस्ति नारायणो
येन शुक्रेण विज्ञापितो दैत्यराट् ।
योऽसुराणां गुरुस्तत्त्वदर्शी भृगुः
तस्य सिद्धाश्रमं [५] प्रापिता कीर्तिदा ।।१६।।
किञ्च, नेपालदेशादिह, प्रस्थिताम्
आगतां मेलयन्तीं तथेरावतीम् ।

गिरने लगे। पूरी पृथ्वी खून से रंग गई और छिन्न-भिन्न अंगों से पट गई। चारों ओर तीव्र कोलाहल, चीत्कार, हाहाकार, और करुण-क्रन्दन से व्याकुल तथा मरे हुए सैनिकों को अपने में डूबा देखकर कोमल गङ्गा बहुत व्यथित हुई।।११-१४।।

इसके बाद वे जहां बलि ने वामन को अद्भुत दान दिया था, उस बलिकी पुण्यकीर्ति के स्मारक बलिया जनपद में गईं। तत्पश्चात् शुक्राचार्य के आश्रम के निकट पहुंची। पुनः नेपाल से आई ताप्ती को मिलाती हुई घाघरा नदी को अपने में मिलते हुए देखती है।।१५-१७।।

entire earth became sanguine being splashed with blood, and mutilated bodies covered it. The tender-hearted *Gaṅgā* was extremely unhappy to witness the terrible atrocities and the wailing cries around. She was anguished to see the sunk bodies of the warriors in Her water.[11-14]

Then She moves on to *Balia* a famous place named after *Bali* who had made a strange gift to *Vāmana*. Later She reaches the hermitage of *Śukrāchārya*. She finds Herself being united with the river *Ghāgharā* which meets the river *Tāptī* (*Irāvatī*) descending from *Nepāl*.[15-17]

घर्घरां घर्घरं कुर्वतीमापगाम्,
अत्र गङ्गा समासङ्गतां पश्यति ।।१७।।
स्वर्णमृत्स्नां वहन्तीं स्वसारं प्रियां
धावमानां सुवर्णां तरङ्गायिताम् ।
तां सदाऽऽवर्तमालाधरां फेनिलां
शोणमालिङ्गति स्नेहिला सत्त्वरम्।।१८।।

मुक्तकेशीमिव क्रोधितामुग्रगां
तुङ्गभङ्गैर्लिहन्तीमिव क्ष्मामिमाम् ।
भञ्जयन्तीं तटान् घोरशब्दायितां
शोणिताक्षीमिव प्रेङ्खति प्रावृषि ।।१९।।
विन्ध्यभूमौ स्थितादुच्चकैः पर्वतात्
शोणभद्रात् प्रसूतामिमामापगाम् ।
ईक्षते राजपुत्रीमिवाऽऽसादितां
नैक-कूलङ्कषा-सेविका-सेविताम् ।।२०।।

तत्पश्चात् मिट्टी रूपी सोना लेकर दौड़ती हुई, सुन्दर वर्ण वाली तरङ्गों से युक्त, विवर्त रूपी माला को धारण करने वाली,फेन से युक्त सोन नदी का आलिङ्गन स्नेहपूर्वक करती है। वर्षाकाल में खुले बालों वाली, शोणिताक्षी काली के समान क्रोधित, उग्र गति से जाने वाली , ऊंची लहरों से पृथ्वी को लीलती हुई सी तटों को तोड़ती हुई सोन नदी दिखती है। यह विन्ध्य के ऊंचे शोणभद्र नामक पर्वत से उद्गत है और अनेक नदियों रूपी सेविकाओं से सेवित राजपुत्री के समान आकर गङ्गा से मिलती है।।१८-२०।।

Then She rushes forth carrying the rich soil adorned with colourful waves wreathed in whirlpools and lovingly embraces the foaming river *Śoṇa*. During the rainy season the river *Śoṇa* looks like terrible *Kālī* with her loosened locks. It rushes with immense speed and seems to swallow the earth by its high waves. She springs from a mountain named *Śoṇabhadra* of the *Vindhya* range. *Śoṇa* is attended by many tributaries and like a princess she flaunts and merges into *Gaṅgā*.[18-20]

### पाटलीपुत्र-वर्णनम्

सङ्गमे पाटलीपुत्रमालोकते
मागधैर्निर्मिता राजधानी पुरा ।
पाटलीपुष्पसम्भार-रक्ताञ्चला
गन्धवाहेन पर्यावृता सुन्दरी ।।२१।।
विम्बसाराऽत्मजोऽजातशत्रुर्युवा
शूरवीरो विजिग्ये गणं [६] लिच्छिविम् ।
'वज्जिमल्लान्' पराभूय विस्तारिता
येन साम्राज्यसीमा स्वकीया तदा ।।२२।।
ईक्षमाणा मुहुर्दुःखिता स्वर्धुनी
क्रूरकर्माणमेनञ्च विद्रोहिणम् ।
प्रेषितो येन राजा प्रजारञ्जको
हन्त ! कारागृहं बिम्बसारः पिता ।।२३।।
किञ्च तस्योदयोभद्र इत्याख्यया
भूषितोऽभूदुदारः सुतः साहसी ।

सोन और गङ्गा के सङ्गम के समीप मगध के राजाओं की राजधानी पाटलीपुत्र थी, जो पाटल (गुलाब) के समूहों से भरी होने से लाल अञ्चल वाली तथा सुगन्धित वायु से पूरित तथा सुन्दर थी। बिम्बसार के पुत्र अजात शत्रु ने लिच्छिवि गण राज्य को जीता और वज्जि तथा मल्लों को पराजित कर अपने साम्राज्य का विस्तार किया। स्वर्धुनी इस क्रूर कर्मा विद्रोही युवा अजात शत्रु को देखकर दुःखी होती थी, जिसने अपने पिता बिम्बसार को कारागार में डाल दिया। उस अजात शत्रु का पुत्र उदयभद्र

**The Pāṭaliputra**

*Pāṭaliputra*, the capital of the kings of *Magadha* is situated at the confluence of *Śoṇa* and *Gaṅgā*. Once upon a time, it had been full with an abundance of rose (*Pāṭala*) and sweet fragrance. Here, *Bimbasār*'s son *Ajātśatru* over- powered the *Lichhivi* Republic and extended the boundary of his kingdom by defeating *Vajjis* and *Mallas*. *Swardhunī* felt great remorse to see this violent and cruel youth who happened to imprison his own father *Bimbsar*. *Ajatshatru*'s son *Uday Bhadra* for whom he (*Ajātśatru*) built this attractive capital named *Pāṭaliputra*, was brave

राजधानी नवीना विनिर्मापिता
यत्कृते पाटलीपुत्रनामा शुभा ।।२४।।
शैशुनागादनुस्वीकृतं सत्त्वरं
नन्दवंशेन साम्राज्यमेतन्ननु [७] ।
अन्तिमो येषु नन्दोऽभवद् दुर्जनो
ब्राह्मणानां विरोधी प्रजापीडकः ।।२५।।
तेन थुत्कारितं विष्णुगुप्तं द्विजं
ब्रह्मवर्चस्ववन्तं [८] महापण्डितम् ।
तं शिखां मोचयन्तं परं क्रोधितं
वीक्ष्य गङ्गाऽप्यभूत् क्षुब्धचित्ता तदा ।।२६।।
नन्दवंशप्रणाशे प्रतिज्ञापरः [९]
सैष चाणक्यनामा व्रती ब्राह्मणः ।
चन्द्रगुप्तं महानायकं प्रैरिरद्
मौर्यसाम्राज्य-संस्थापनाय प्रधीः ।।२७।।

साहसी और उदार था और साम्राज्य के विस्तार में लगा था। उसी के लिए उसने पाटलीपुत्र नाम की सुन्दर राजधानी बनवाई ।।२१-२४।।

पाटलीपुत्र में शैशुनाग वंश के पश्चात् नन्दवंश ने राज्य किया, जिसका अन्तिम राजा ब्राह्मणों का विरोधी और प्रजा का पीड़क था। उसने विष्णुगुप्त नामक महान् पण्डित, ब्रह्मतेज सम्पन्न ब्राह्मण का तिरस्कार किया; उस समय शिखा खोलते हुए नन्द वंश के विनाश की प्रतिज्ञा करने वाले, क्रोध से लाल उस ब्राह्मण को देखकर गङ्गा भी बड़ी दुःखी हुई। वह चाणक्य नाम का व्रती ब्राह्मण नंदवंश के सर्वनाश के

and generous.[21-24]

At *Pāṭaliputra* the *Nanda* dynasty succeeded the *Śaiśunāga* dynasty and its last king was an anti-brahmin and a tormentor of the populace. He had shown deep irreverence to a great brahmin scholar *Viṣṇugupta*. When he uncoiled his *śikhā*, making a vow to destroy the *Nanda* dynasty, *Gaṅgā* felt deeply sorry to see the blood-shot eyes of the brahmin. This brahmin assumed the name of *Chāṇakya* and inspired *Chandragupta Maurya* a great warrior

राज्यलिप्सून् सदा विद्विषन्तो नृपान्
छेत्तुमैच्छत् तदा कूटनीतिप्रियः ।
अर्थशास्त्रप्रणेता मनीषी महान्
भारतीयैकताऽऽखण्डतोन्नायकः[१०] ॥२८॥

अर्थश्च मूलमुभयोः पुरुषार्थयोर्वै
अर्थो मनुष्यभरिता सकला धरित्री।
राज्ञि स्वधर्मनिरते सति जीवलोकः
सौख्यं लभेत सुतरामिति कौटिलीयम्[११] ॥२९॥
आन्वीक्षिकीप्रभृतयो विमलाः चतस्रो
विद्या अधीत्य विनयेन विभासमानः ।
राजा प्रजा-विनयने कुशलः प्रतापी
भुङ्क्ते सदा वसुमतीमिति कौटिलीयम्[१२] ॥३०॥

लिये चन्द्रगुप्त नामक महान् सेनानी को मौर्यसाम्राज्य की स्थापना की प्रेरणा देने लगा। नीतिज्ञ चाणक्य ने राज्य लिप्सा में रत एक दूसरे से वैर करने वाले राजाओं में फूट डालना प्रारम्भ किया। वह महान् मनीषी अर्थशास्त्र का रचनाकार था तथा भारतीय एकता और अखण्डता का उन्नायक था।।२५-२८।।

कौटिल्य ने अपने ग्रन्थ में प्रतिपादित किया कि - अर्थ धर्म और काम दोनों पुरुषार्थों का आधार है। अर्थ शब्द मनुष्यों वाली सम्पूर्ण पृथ्वी के लिये प्रयुक्त है। राजा जब धर्म में निरत होता है तभी सभी प्राणी सुख प्राप्त करते हैं। आन्वीक्षिकी, त्रयी, वार्ता, दण्डनीति -इन चारों विद्याओं के अध्ययन से जब राजा में विनय आता

to found the *Mourya* dynasty. *Chāṇakya*, a great diplomat started to sow hostility and dessension among the ambitious kings who were inimical to eachother. The wise man was a great economist and stood for the integration of India.[25-28]

*Kautilya* in his great book *Arthaśāstra* asserts that -*Artha* is the base of *Dharma* and *Kāma*. The term *Artha* denotes this entire earth. When the king observes *Dharma*, all the creatures are happy. When a king studies *Ānvīkṣikī*, *Trayī*, *Vārttā* and *Daṇḍnīti*, he

वित्तं त्वपात्रकरयोर्न भवेत् कदाचित्
पात्रो धनेन न कदापि च वञ्चितः स्यात् ।
सम्यक्पदेषु विनियोगविधानरूपं
शास्त्रं सदा विजयते विपुलं गभीरम्[१३] ।।३१।।

सिंहासने समधिरोहयितुं प्रवृत्तो
यश्चन्द्रगुप्तमनिशं ह्युपदेष्टुकामः ।
सद्राजनीतिविषयं विशदीचकार
श्रेष्ठं तमूर्मिभिरहो ! अभिनन्दयन्ती ।।३२।।

अग्रे गता समवलोक्य प्रजां प्रसन्नां
कौटिल्यशिष्य-परिपालनलब्धशान्तिम् ।
सा प्रावहत् सुविमला मधुरस्वनेन
प्रेष्ठं सुतं मृदुलयैरनुलालयन्ती ।।३३।।

है, तब प्रतापी राजा प्रजा में विनय का आधान करके पृथ्वी पर राज्य करता है। धन को अपात्र को नहीं देना चाहिए और पात्र को कभी धन से वञ्चित नहीं करना चाहिए। यह सम्यक् विनियोग का विधान करने वाला कौटिलीय अर्थ शास्त्र अत्यन्त गम्भीर सिद्धान्तों का प्रतिपादक है।।२९-३१।।

जो चाणक्य चन्द्रगुप्त को सिंहासन पर बैठाने के लिए उसे उपदेश देता था, उसने सद्राजनीति के विषय को अपने ग्रन्थ अर्थशास्त्र में विस्तृत किया। उस श्रेष्ठ पुत्र को गंगा लहरों से अभिनन्दित करती हुई आगे बढ़ी और कौटिल्य के शिष्य चन्द्रगुप्त के द्वारा पालित शान्ति पूर्ण जीवन व्यतीत करने वाली प्रजा को देखकर

begets humility, then the valorous king instils the same in his subjects and rules over the earth. Moreover wealth should not be given to the undeserving person and a deserving one should not be deprived of wealth. The *Arthaśāstra* of *Kautilya* teaches the art of proper investment and propounds extremely significant theories.[29-31]

He was the same man who wanted to enthrone *Chandragupta* and expounded the salient features of morality in politics in his *Arthaśāstra*. *Gaṅgā* had honoured that great son with Her rippels and had appreciated the peace-loving people

तस्य पौत्रो जिगीषुः प्रचण्डो युवा
बिन्दुसारस्य पुत्रो महासैनिकः ।
नैकदेशान् विजिग्ये रणे कीर्तिमान्
शूरवीरः प्रतापी नृपो विश्रुतः[१४] ।।३४।।
अश्रुपातच्छलेनाऽवहद् निष्ठुरात्
चेतसः तस्य कारुण्यधाराऽद्भुता ।
दृष्टवान् रक्तपातं कलिङ्गे यदा
कातरोऽभूदशोको व्यथाविह्वलः[१५] ।।३५।।
पार्थिवं तं दयाधारया प्लावितुं
नूनमादाय गङ्गातरङ्गाः शुभाः ।
तेन कारुण्यमातन्वता प्रेषिता
आत्मबोधस्वरूपाः प्रकाशप्रदाः ।।३६।।

विमल धारा से बही और अपनी मधुर ध्वनि से प्रिय पुत्र चन्द्रगुप्त को दुलारने लगी । चन्द्रगुप्त का पौत्र और बिन्दुसार का पुत्र अशोक महान् सेनानी था। उसने युद्ध में अनेक देशों को जीत लिया ; जो शूरवीर, प्रतापी विश्वविख्यात राजा हुआ, उसके निष्ठुर हृदय से आंसुओं के बहाने करुणा की धारा बह चली। जब उसने कलिङ्ग युद्ध में रक्त पात देखा तो दुःख से भरकर अशोक कातर हो उठा। उस समय मानों गङ्गा की लहरों से आत्मबोध एवं प्रकाश प्रदान करने वाली ज्ञान तरंगें लेकर करुणा का प्रसार करने वाले गौतम बुद्ध ने उस राजा के पास यह उपदेश भेजा -।।३२-३६।।

living under the protection of *Chandragupta* and with the music of Her waters caressed the king. *Aśoka*, the grandson of *Chandragupta* and the son of *Bindusāra* was a great warrior. He conquered a host of countries and became celeberated as a brave king. The hard-hearted *Aśoka* shed tears of compassion when he saw that terrible bloodshed in the war of *Kaliṅga*. At that time *Buddha*, the champion of love and compassion sent to the king enlightenment and self-knowledge as if divining them from the waves of *Gaṅgā*.[32-36]

सर्वं प्रतिक्षणमिदं परिवर्तमानं
सर्वं स्वलक्षणमिदं परिदृश्यमानम् ।
शून्यं प्रपञ्चमखिलं प्रतिभाति दुःखं
'भन्ते'! कथं भजसि वृत्तिमिमां कठोराम्[१६] ।।३७।।

हिंसां विहाय करुणार्णवमज्जितः सन्
त्वं मानसात् सकलतापमपेतुकामः।
नित्यं समाचर 'भदन्त' ! चराचरेषु
प्रीतिं तथाऽतिसुभगां मृदुलामहिंसाम् ।।३८।।

अष्टाङ्गमार्गमधुना[१७] त्वमतन्द्रितः सन्
सम्यक् समाचर पवित्रयितुं स्वचित्तम् ।
आगत्य संघशरणं शृणु मे प्रशान्तां
श्रेयस्करीं सदुपदेशमयीं सुवाणीम् ।।३९।।

शस्त्रैर्जयं जहि बिभेहि विनाशवृत्तेः
प्रेम्णा मनोविजयमिच्छ सदा प्रजायाः।

तथागत ने कहा – 'हे भन्ते! जो कुछ संसार में दिखाई दे रहा है वह क्षणिक है, स्वलक्षण है और शून्य है। फिर तुम ऐसी कठोर प्रवृत्ति में क्यों लगे हो ? हिंसा को त्याग कर करुणा में डूब कर अपने मन से सम्पूर्ण ताप मिटा दो। हे भदन्त! चर और अचर सभी में सुन्दर प्रीति और कोमल अहिंसा का आचरण करो। तुम अब आलस्य का परित्याग कर अपने चित्त को पवित्र करने के लिए अष्टाङ्ग मार्ग को अपनाओ और संघ की शरण में आकर 'बुद्धं शरणं गच्छामि' की कल्याणमयी और सुन्दर उपदेशमयी मेरी वाणी को सुनो। शस्त्रों से जय करना छोड़ दो, विनाशवृत्ति से बचो और प्रजा के मन

*Tathāgata* said,"O *Bhante*! whatever is visible in this world is transitory (*kṣaṇik*) and *śūnya*. Why then do you fan up cruelty? Give up voilence and experience peace practising compassion. O *Bhadant*! treat every creature of this creation with love and compassion. Renounce inertia now and for purification of the self, accept *Aṣṭāṅga-mārga*. Come to the fold of the *Saṅgha* and listen to the redeeming call '*Buddham Śaraṇam Gachhāmi*' and my preachings. Abandon the practice of conquering by force, win

धर्मप्रचारनिपुणस्य नृपस्य नूनं
वश्या भवन्ति सुतरां स्वयमेव लोकाः ।।४०।।
एतत् तथागतवचः मधुरं हितञ्च
श्रुत्वा प्रसन्नवदनः परिहीनशोकः ।
बौद्धो भवन्नतितरां सदयो नरेन्द्रो
राज्यं चकार सुचिरं मतिमानशोकः ।।४१।।
उन्नतिर्ह्रास आलोकितो नैकधा
निर्विशेषेण भावेन राज्ञां तया ।
विक्रमादित्यराज्ये पुनः प्रेक्षितः
काव्य-सङ्गीत-साहित्यशास्त्रोदयः ।।४२।।
ईक्षती संस्कृतिं सभ्यतामुन्नतां
धर्म-विज्ञान-साहित्य-शास्त्रोदयम् ।
गुप्तकाले सुवर्णे युगे प्रावहद्
गाङ्गधारा प्रहृष्टा सती मञ्जुला ।।४३।।

को प्रेम से जीत लो। जो राजा धर्म के प्रचार में निपुण होता है उसके वश में लोक स्वयं हो जाता है'। तथागत की इस मधुर और हितकारी वाणी को सुनकर शोक को त्याग कर प्रसन्न मुख वाला, बौद्ध बनकर दयालु राजा अशोक बहुत दिन तक राज्य करता रहा ।।३७-४१।।

श्रीगङ्गा ने इस प्रकार राजाओं की उन्नति और ह्रास को निर्विशेष भाव से देखा। विक्रमादित्य के राज्य में पुनः साहित्य-संगीत-कला की उन्नति हुई। संस्कृति व सभ्यता की उन्नति, धर्म, विज्ञान, साहित्य और शास्त्र का अभ्युदय देखती हुई गङ्गा

over your subject by the power of love. The common man becomes easily overpowered by that king who follows the path of *Dharma*." Hearing these beneficial teachings of *Tathāgata*, *Aśoka* relinquished his remorse, became a follower of *Buddha* and ruled as a compassionate king.[37-41]

*Śrī Gaṅgā*, thus, had watched with an air of detachment the rise and fall of the kings. There was a resurgence of art and music and literature during the reign of *Vikramāditya*. *Gaṅgā* rejoiced

कालक्रमेण परिवर्तित-भाग्यचक्रां
दुर्भाग्य-केतुकवलीकृतराजधानीम् ।
क्रूरत्व-ताण्डव-विनष्टसुखामशान्तां ।
दृष्ट्वा द्रुता करुणया विललाप गङ्गा ।।४४।।

हूणैरसङ्ख्य[१८]-वनवासिभिरत्यसभ्यै
आक्रामकैश्च परिलुण्ठित-सर्वशोभाम् ।
तां पाटलीं समवलोक्य समृद्धिहीनां
नूनं स्वभावमृदुला विललाप गङ्गा ।।४५।।

तान् लुण्ठकान् समवरोधयितुं प्रवृत्तः
स्कन्दः कुमारवदयुध्यत शत्रुसैन्यम् ।
तं चिन्तितं स्वलहरीमभिलक्षयन्तं[१९]
वात्सल्यपूर्णहृदया स्मरतीह गङ्गा ।।४६।।

तां पाटलीमभिनवामवलोक्य सिद्धां
वाणीं तथागतमुखात् स्फुटितां तदैव।

गुप्तकाल में प्रसन्नता पूर्वक बही। कालक्रम से पाटलीपुत्र दुर्भाग्य रूपी केतु द्वारा ग्रस ली गई, क्रूरता के ताण्डव ने उस का सुख-चैन छीन लिया, वनवासी असभ्य हूंणों ने आक्रमण कर उसकी शोभा को नष्ट कर दिया। पाटली को ऐसी लुटी हुई देख स्वभाव से कोमल गङ्गा ने मानो विलाप किया । उन लुटेरों को रोकने में आजीवन लगे कार्तिकेय के समान स्कन्द गुप्त शत्रु सेना से आजीवन लड़ते रहे। चिन्तामग्न महल के झरोखे से अपनी गङ्गा की लहरों को एक टक देखने वाले अपने उस पुत्र को गङ्गा आज भी याद करती हैं। जब पाटली का निर्माण हो रहा था

to see the reawaking of culture, religion, science and creative writing during the Gupta dynasty. In the course of time misfortune eclipsed *Pāṭaliputra*. Its peace and prosperity were ruined by the onslaught of violence. The barbarian *Huṇās* attacked and disfigured *Pāṭaliputra*. To see *Pāṭaliputra* raveged thus, the tender-hearted *Gaṅgā* wailed heavily. *Skandagupta* like *Kārtikeya* fought for his entire life to thwart the army of those vandals. She still now remembers her worried son looking at Her

'अभ्युन्नतिं परमवाप्य विनङ्क्ष्यतीयं
कालक्रमेण नगरी' स्मरतीति गङ्गा ।।४७।।

ईक्षतेऽथ प्रतिष्ठापितं पत्तनं
'पट्टणं' शेरशाहेण संज्ञापितम् ।
दुर्गमप्यत्र तीरे कृतं सुन्दरं
राजनीतिप्रियाणां कृते सौख्यदम् ।।४८।।

राजधानी विहारप्रदेशस्य या
साम्प्रतं ज्ञायते सर्व-सौविध्यदा ।
नागरीसभ्यतासंयुताद्यापि पू-
रस्ति वाणिज्यकेन्द्रं समेषां कृते ।।४९।।

यत्र गोविन्दसिंहो गुरुः साहसी
स्वाभिमानी दृढो[२०] जन्म लेभे शुचिः ।

उस समय तथागत ने कहा था कि यह नगरी अभ्युदय को प्राप्त होगी, किन्तु कुछ समय बाद नष्ट कर दी जायेगी- बुद्ध के वे वचन गङ्गा को आज भी याद हैं।।४४-४७।।

उसके बाद वह शेरशाह के द्वारा स्थापित पट्टण (पटना) को देखती है और तट पर बने दुर्ग को भी, जो राजनैतिक गतिविधियों का प्रमुख स्थल रहा है, देखती है। यह पटना आज विहार केन्द्र की राजधानी है और सब सुख सुविधा, नगरीय सभ्यता से युक्त प्रमुख व्यापार केन्द्र है। यहां स्वाभिमानी, पवित्र एवं साहसी गुरुगोविन्द सिंह ने जन्म लिया था और प्राणदान करने पर भी धर्मान्तरण नहीं होने

waves intently through the casement of his palace. It is said that *Tathāgata* had prophesied at the time when the city of *Pāṭalī* was being built that it would see its full flowering but it would also meet its decay later on. *Gaṅgā* till today remembers that prediction of the *Buddha*.[44-47]

*Gaṅgā* flows past the city of Patna (*Paṭṭaṇa*) founded by Sher Shah and the castle built on Her bank.It happened to be the centre of political activities. At present it is the capital of Bihar and an important buisness centre enjoying the amenities of the modern city life. Here the self-respecting, righteous and fearless

प्राणदानेऽपि न स्वीचकार व्रती
धर्मवीरः स धर्मान्तरं कुत्सितम् ।।५०।।
हन्त ! भित्तौ हठात् स्थापयित्वा चितौ
शासकैः तस्य पुत्रौ स्वधर्मे रतौ ।
तद्धि मर्मान्तपीडाकरं वृत्तकं
स्मर्यते नो कथं सार्द्रया गङ्गया ।।५१।।
वैजयन्ती प्रदेया यशस्कारिणी
यस्य नाम्ना रणक्रीडने केसरी ।
'जीतसिंह' स्तथा निर्ममे मन्दिरं
यत्र तं प्लावयन्ती पुरं दृश्यते ।।५२।।
सङ्गमय्योर्वरत्वप्रदात्रीमसौ
गण्डकीं पावनीं जातु नारायणीम् ।
स्वल्पसारां गयातीर्थसंशोभितां
फल्गुधारां नयन्तीं नदीं पश्यति ।।५३।।

दिया था। उनके दोनों पुत्रों को शासकों द्वारा दीवार पर चुन दिया गया था, जो अपने धर्म के प्रति निष्ठा रखते थे। उस मर्मान्त पीड़ादायी घटना को आर्द्र गङ्गा भला क्यों न याद करेगी। जिस के नाम से यश फैलाने वाली वैजयन्ती (रणजीत सिंह ट्राफी ) दी जाती है,उन खेल जगत् के केसरी जीत सिंह ने यहां सुन्दर मन्दिर बनवाया है ।।४८-५२।।

इससे आगे भूमि को उर्वरता प्रदान करने वाली गण्डकी नदी को मिला कर, अल्प जलवाली गयातीर्थ में बहने वाली फल्गु नदी को मिलाने वाली पुनपुन नदी

Guru Govinda Singh was born who embraced death yet did not get converted. His sons were immured alive inside walls by the rulers, as they stood totally dedicated to their own religion. Why shouldn't the moist *Gaṅgā* remember this distressing tragedy? The great sports personality Raṇajīt Singh after whose name the prestigious Raṇjīt Singh Trophy is given has built an imposing temple here.[48-52]

She (*Gaṅgā*) embraces the river *Gaṇḍakī* which turns the soil fertile and then watches the flow of the river *Punpun* which

पुनः पुनां पुनः पुनर्विलोक्य सुप्रवाहिताम् ।
चलज्जलां मनोहरां नयत्यसौ सुसङ्गताम् ।।५४।।

वैशालीं गणतन्त्रशासनयुतामादर्शभूतां पुरा
शान्तां लिच्छिविशासकैर् बहुतरां सम्वर्धितां सुन्दरीम् ।
स्मारं स्मारमहो ! विलुप्तविभवां यात्यग्रतः स्वर्धुनी
काल़स्यैव गतिं विचिन्त्य कुटिलामुत्थानपातान्विताम् ।।५५।।

नालन्दां प्रसृतप्रकीर्तिमतुलां शिक्षास्थलीं नित्यशो
दिङ्नागादिबुधैः प्रतर्कपटुभिर् बौद्धैः समालङ्कृताम् ।
तुर्कैर् नष्टसमस्तशास्त्रविभवां ध्वंसावशिष्टां बत
प्रज्ञानेन विभूषिता समरसा जानाति सा साक्षिणी[२१] ।।५६।।

को श्रीगङ्गा देखती हैं। सुन्दर जलवाली पुनपुन को लेकर आगे बढ़ती हुई गङ्गा वैशाली गणराज्य के उत्कृष्ट वैभव का स्मरण करती है,जो लिच्छिवि शासकों द्वारा समृद्ध की गई थी। उसकी वर्तमान स्थिति पर तरस खाकर वह उत्थान और पतन से युक्त काल की कुटिल गति के विषय में विचार करती है। दिङ्नाग आदि तार्किक बौद्धों से अलङ्कृत विख्यात शिक्षा स्थली नालन्दा को तुर्कों ने नष्टकर दिया। वहां के पुस्तकालय को भस्म कर दिया । इस समय उसके ध्वंसावशेष बचे हैं। उसके विषय में साक्षीरूप से बहती हुई ज्ञान से समत्व को प्राप्त हुई गङ्गा जानती हैं।।५३-५६।।

connects itself with *Phalgu*, a river with scanty waters gliding in *Gayā* region. *Gaṅgā* proceeds forward assimilating the alluring water of *Punpun*. She remembers the great wealth of the Republic of *Vaiśāli* which was made prosperous by the *Lichhivi* rulers. She takes pity on its present plight and ponders over the intricate nature of transitory time. The Turks had attacked and ruined the famous educational centre of *Nālandā* university enriched by the presence of the Buddhist logicians like *Diṅgnāga* and others. The invaders torchd the library of rare books. At present the ruins are to be seen alone. The enlightened *Gaṅgā* knows about this and keeps on flowing as an witness to all this event stoically.[53-56]

राजधानी पुरा बिम्बसारस्य या
राजमाना स्म रम्या समृद्धा वरा ।
वैभवाभूषितां तां समृद्धामपि
ध्वंसशेषामिदानीं विजानात्यसौ ।।५७।।

वैभार-रत्न-विपुलोदय-हेमसंज्ञैः
पञ्चाद्रिभिः परिवृतां परमां सुरम्याम् ।
शीतोष्णकुण्डलसितां विमलैः प्रपातैर्
युक्तां गिरिव्रजमिति[22] श्रुतनामधेयाम्।।५८।।

राज्यप्रकर्षमधिगम्य चिरं रराज
प्रासाद-हर्म्य-मठ-मन्दिर-सङ्कुला या।
सैवाऽद्य राज[23]-गृहमित्यभिधीयमाना
विज्ञायते मगधभूपतिराजधानी ।।५९।।

पाटलीपुत्र से पहले जो राजधानी विम्बसार द्वारा शासित थी, वैभव से परिपूर्ण उस समृद्ध स्थली को आज वे ध्वंसावशेषों में देख रही हैं। इस नगरी का नाम गिरिव्रज था , क्यों कि वहां वैभारगिरि, रत्नगिर, विपुलगिरि, उदयगिरि और सुवर्णगिरि नाम की पहाड़ियां हैं, जो शीतल और उष्ण जल के कुण्डों से युक्त सुन्दर झरनों से सजी हुई सुरम्य स्थली है। जो राज्य की अभ्युन्नति को प्राप्त कर बहुत दिनों तक शोभायमान थी, महलों , मठों ,मन्दिरों से भरी थी, वही राजगीर (राजगृह) नाम से आजकल जानी जाती है। मगध राजाओं की यह राजधानी आज भी पुरातत्त्ववेत्ताओं

She now witnesses that prosperous capital lying in ruins, once ruled by *Bimbsār* prior to the creation of *Pātaliputra*. This city was later known as *Giribraja* as there are different mountain ranges named *Vaibhārgiri*, *Ratnagiri*, *Vipulgiri*, *Udayagiri* and *Suvarṇagiri*, which are richly endowed with the reservoirs of warm and cool water and beautiful springs as well. This enchanting place has seen the burgeoning of the state to the full. This place which once teemed with palạces, monasteries, temples at present is known as *Rājagīra* (*Rājagṛha*). Even today this capital of *Magadha*

अद्यापि दर्शकगणैरभिनन्द्यमाना
स्वातीतगौरवकथामभिजल्पतीव ।
श्यामाञ्चला विविध-पादप-पुष्परम्या
विज्ञायते मगधभूपति-राजधानी ।।६०।।

दूरतो द्वारबङ्गं विलोक्याऽमृता
जानकीजन्मभूमिं नमन्ती गता ।
मैथिलं कोकिलं नाम विद्यापतिं
संस्मन्तीशभक्तं कविं साधकम् ।।६१।।

श्रूयते भक्तिभावाञ्चितस्याप्यहो !
आर्द्रचित्तस्य वाणीं[२४] तदा शृण्वती।
आगता तत्समीपे स्वयं कोमला
सा द्रुता स्नेहधारामयी वत्सला ।।६२।।

अङ्गदेशे तरङ्गैः पदं स्थापितं
यत्र चासीत् पुरा मुद्गलस्याश्रमः।

और दर्शकों द्वारा देखी जाती है, खण्डहरों में स्थित वह अपने अतीत की गौरव गाथा को कहती हुई सी नजर आती है, हरी-भरी विभिन्न पेड़ों-पौधों और फूलों से सुशोभित है।। ५७-६०।।

श्रीगङ्गा दूर से ही दरभंगा को देखकर जानकी की जन्म भूमि मिथिला को प्रणाम करती हैं और मैथिल कोकिल विद्यापति का स्मरण करती हैं। भक्ति से सराबोर जिसकी आर्तवाणी को सुनकर स्नेह धारामयी वत्सला गङ्गा स्वयं उनके पास द्रवित होकर आईं- ऐसा सुना जाता है। फिर उन्होंने अङ्गदेश में कदम

emperors is a centre visited both by the archeologists and the common sight seers. Existing in the desolate ruins the ancient city seems to recount its past glory.[57-60]

*Śrī Gaṅgā* bows to *Jānakī*'s birth place *Mithilā*, when She nears *Darbhangā* and recalls *Vidyāpati*, the great poet of *Mithilā*. It is said that *Gaṅgā* bearing Her stream of affection reached this dedicated son of Hers to hear his cry of anguish. Then She set Her foot on the land of *Aṅgadeśa* where there once happened to

सप्तधाराभिरावर्धितां गण्डकीं
भाग्यवत्या युतां मेलयन्त्याऽनया ।।६३।।
उर्वरे भूमिभागे सुरम्येऽत्र यद्
दुर्गमुत्कृष्टमासीत् स्थितं रोधसि।
तद्धि भग्नावशिष्टं बत प्राक्तनं
गौरवं श्रावयत् शोभते साम्प्रतम् ।।६४।।
वीक्षिते जह्नुसिद्धाश्रमे पावने
प्रीतिपाथोदधौ मज्जिता जह्नुजा ।
पितृगेहं समासाद्य किञ्चित् क्षणं
ग्लापयित्वा श्रमं प्रस्थिता चञ्चला ।।६५।।
अत्र चम्पाभिधाना महार्हाऽनया
राजधान्यङ्गदेशस्य दृष्टा पुरा ।
सा विकासेन ऋद्धा पुरी चान्तिमा-
ऽऽसीत्ततो विस्तृतं काननं शोभितम् ।।६६।।

रखा जहां पहले मुद्गल ऋषि का आश्रम था। मुंगेर जिले में सात धाराओं से युक्त और भागमती को मिलाने वाली बूढ़ी गण्डक को वे अपने में मिलाती हैं।।६१-६३।।

इस उपजाऊ भूमि में उनके तट पर एक सुन्दर दुर्ग बना था, जो अब भग्नावशेष के रूप में अपने गौरव की कहानी कह रहा है। यहां जह्नु ऋषि के आश्रम को देखकर गंगा प्रसन्न होती हैं , अपने पिता के घर में थोड़ी देर विश्राम करती हुई सी थकान दूर करती हुई आगे बढ़ जाती हैं।यहाँ पहले अत्यन्त समृद्ध चम्पा नाम की

be the hermitage of *Mudgal Ṛṣi.* At Munger she enjoins with Her stream the river *Būḍī Gaṇḍaka,* which has seven streams and also absorbs in itself the river *Bāgamatī.*[61-63]

On this fertile land, on Her bank there was a fort which today narrates the tale of its past glory lying in its present dissolution. *Gaṅgā* is elated to see the hermitage of *Jahnu Ṛṣi.* She seems to rest for a while at Her father's house and after getting refreshed procceeds further.Long ago the immensely luxuriant

साम्प्रतं दक्षिणे रोधसि स्थापितं
साऽगताऽन्यत्पुरं नूतनं सिञ्चितुम् ।
आकरैः पूरितं तून्नतं सौख्यदं
तत्समुद्योगशीलैर् नरैः सङ्कुलम् ।।६७।।
अत्र गङ्गा गभीरा विशालाञ्चला
कौशिकीं सङ्गमायाह्वयत्यूर्मिभिः ।
शापरूपं विहारप्रदेशाय हा !
वृष्टिकालेऽतिविद्रोहिणीं वर्धिताम् ।।६८।।
तामजेयां समाहूय गङ्गा ततः
कौशिकीं सप्तधाराभिरावर्धिताम् ।
बङ्गदेशस्य या राजधानी पुरा
तां गताऽधित्यकां पर्वतैः संयुताम् ।।६९।।

नगरी अङ्ग देश की राजधानी थी, जो विकसित होने से वैभवपूर्ण थी। इसके आगे का क्षेत्र विशाल जंगल था। अब वे अपने दाहिने तट पर स्थित भागलपुर नामक नये नगर को सींचने जाती हैं जो खानों से युक्त, धन से उन्नत, सुख-सुविधा सम्पन्न और उद्योग के कल-कारखानों से युक्त है। यहां गम्भीर विशाल अञ्चल वाली गङ्गा अपनी लहरों से कौशिकी को सङ्गम के लिये मिलाती है, जो वर्षा काल में बाढ़ से अत्यन्त विद्रोहिणी सी लगती है और विहार के लिये शाप रूप है। सात धाराओं में

*Champānagari*, the capital of *Angadeśa* was situated here. The later was also a highly developed place and hence wealthy. A dense forest stretched beyond it. Now She moves on to moisten the newly built city of *Bhāgalpur* situated on Her right bank, which is endowed with mines, industries and luxury. Here the river *Gaṅgā* with sombre and wide expanse joins along with the river *Kauśikī* which turns ferocious and baneful for Bihar, being flooded during the rainy season. The river *Gaṅgā* reaches the hills of *Rāja Mahala* the erstwhile capital of *Baṅga Bhūmi*. She seems to invite

गङ्गार्णवोभयसमागमसुस्थली या
ख्याता पुरा परमपावनतीर्थरूपा ।
गण्डाद्रिभिः परिवृता रमणीयभूमिः
सैवाऽस्ति 'राजमहलेति'पुरी प्रसिद्धा ।।७०।।

बढ़ी हुई सप्त कोशी को बुलाती हुई गङ्गा राजमहल की पहाड़ियों में जाती है जो पहले बङ्गदेश की राजधानी थी और पर्वतों से सुशोभित है। पहले यहां गङ्गा और सागर का सुन्दर सङ्गम था। यह राजमहल परम पावन तीर्थ के रूप में प्रसिद्ध था।।६६-७०।।

*Saptakośī* which billows in seven streams. In the past here was a beautiful confluence of *Gaṅgā* and the sea and it was famed as a very holy pilgrimage.[66-70]



## अष्टमः सर्गः

## बङ्गभू-वर्णनम्

ऊर्मिपादार्पणं बङ्गभूमौ यदा
सर्वसौभाग्यवत्या कृतं सुन्दरम् ।
कान्तमम्भोधिमालिङ्गितुं चञ्चला-
ऽभूत् तरङ्गैस्तदा सा समुद्रप्रिया ।।१।।
उत्सुकः सागरस्तावदासीत् पुरा
चुम्बितुं वीचिभिश्चात्र वध्वाननम् ।
अत्र बङ्गोपवारांनिधौ पावनं
सङ्गमं प्राक्तनं संस्मरत्यग्रगा ।।२।।
मृत्तिकोपायनं संवहन्त्याऽनया
निर्मितोऽयं समुद्रांतदेशो नवः ।

सर्वसौभाग्यवती श्रीगङ्गा ने जब बंगभूमि में पादार्पण किया तब वह तरङ्गों से अपने कान्त समुद्र का आलिङ्गन करने के लिये चञ्चल हो उठी। सागर भी अपनी वधू के मुख को चुम्बन करने को उत्सुक था। गङ्गा ने यहां राज महल में सागर के साथ अपने पूर्व संगम का स्मरण किया। मिट्टी रूप उपहार को ला-लाकर उसने ही

### The Bengal Vignette

When *Śrī Gaṅgā* enters *Baṅgabhūmi*, She becomes restless to embrace the sea–Her consort–with Her waves. The ocean too seems to be eager to kiss the face of his bride. Here at *Rājamahal Gaṅgā* recalls Her previous union with ocean. She has created this delta region of West Bengal by bringing Her rich

पश्चिमो बङ्ग इत्याख्यया विश्रुतो
मृत्तिका स्वर्णमादाय संशोभितः ।।३।।
कर्शिताःत्रासभीताऽत्र बङ्गप्रजा
धारया कृष्णभक्त्या परिप्लावयन् ।
यत्र चैतन्यदेवः किलाऽवातरत्
तं प्रदेशं समासादिता तुष्टिदा ।।४।।
तोयमार्गागतैर् दस्युभिर् लुण्ठिता
वञ्चिता या वणिग्भिश्च वैदेशिकैः।
दुःख-दारिद्रयदीनाः क्षुधापीडिता
दृष्टवत्यत्र बङ्गप्रजाः सा पुरा ।।५।।
अत्र वाणिज्यहेतोः समासादिता
आङ्ग्लवैदेशिका म्लेच्छदेशात् पुरा ।
विस्तृताऽऽवारपारा किलाऽम्भः-पथा
तत्र गङ्गाऽपि पोतावहाऽदृश्यत ।।६।।

इस डेल्टा प्रदेश का निर्माण किया, जिसे पश्चिम बंग कहते हैं। यवनों के अत्याचारों से पीड़ित बंगाल की प्रजा को कृष्णभक्ति की धारा से सींचने के लिये चैतन्य महाप्रभु का जहां अवतार हुआ था, उस प्रदेश में तुष्टिकारिणी गङ्गा जी पहुंची। उसने उस समय जलदस्युओं से लूटी गयी, विदेशी व्यापारियों द्वारा ठगी गई, दुःख-दरिद्रता और भुखमरी से पीड़ित बंग प्रजा को देखा। म्लेच्छ देश ब्रिटेन से अंग्रेज व्यापारी यहां आये। उस समय गङ्गा भी चौड़े फाट वाली थी और उसमें जहाज चलते थे।।१-६।।

gift of soil along with Her water. The placating *Gaṅgā* reaches that place where *Śrī Chaitanya Mahāprabhu* came as an incarnation to overwhelm and nourish the populace of Bengal, oppressed by *yavanas* with the sap of *Kṛṣṇabhakti*. In the bye gone days She had percieved the citizens of Bengal being plundered by pirates, beguiled by foriegn traders and lying in an acute state stricken by famine and poverty. The British traders came here. At that point of time *Gaṅgā* was very wide and navigable.[1-6]

भोगमात्रेरतान् दुर्मतीन् शासकान्
वीक्ष्य निश्चेतना भारतीयाः प्रजाः ।
आङ्ग्लराज्यप्रतिष्ठापनं वञ्चकाः
स्वार्थसिद्धिप्रवीणाः समारेभिरे ।।७।।

'चारनॉको' वणिक् स्वध्वजोत्तोलनं
भारतेऽकल्पयद् धूर्तबुद्धिः सदा ।
बङ्गदेशे भुवं क्रीतवान् प्रायशः
कर्तुमारब्धवान् विक्रयं सर्वतः ।।८।।

व्यापारिणस्ते प्रसृताः समन्तात्
शनैः-शनैः बङ्गविहारभूमौ ।
'सिराजुदौला' नृपतेः प्रयत्नाद्
उन्मूलनं कर्तुमनाः प्रकामम् ।।९।।

सेनापतिः 'क्लाइव'-संज्ञकोऽत्र
व्यराजत प्राप्य जयश्रियं चिरम् ।
'सिराजुदौला'-यवनः प्रवञ्चितो
धूर्तैः स्वसेनानिभिरेव सङ्गरे ।।१०।।

उन लोगों ने यवन शासकों को भोगविलास में डूबा तथा हिन्दुओं को चेतना से शून्य देखकर अपनी स्वार्थ की सिद्धि करना प्रारम्भ किया और अंग्रेजी राज्य की स्थापना के विषय में सोचा। धूर्त बुद्धि चारनॉक ने भारत में अपना झण्डा गाड़ना चाहा। इस लिए उसने बंगाल में जमीन खरीदी और व्यापार करने लगा। धीरे-धीरे अंग्रेज व्यापारी बंगाल और विहार में फैल गये और नबाव सिराजुद्दौला को समूल

To see the luxurious life style of the then rulers and realizing the inertia of the native populace they started making their selfish design effective and thought of promoting the British rule. Clever Job *Chārnoka* acquired land in Bengal and started his business there. Graudually the British traders spread all over Bengal and Bihar and united to uproot *Nawāb Sirājuddoulāh*. They made his army-chief betray him. As a result *Sirājuddoulāh* was badly

आसीत् स युद्धै चतुरः प्रतापवान्
अलं बलं तावदभूत् परेभ्यः ।
तथापि सेनापतिभिश्छलेन
त्यक्तो द्रुहद्भी रणभूमिमंध्ये ।।११।।

एकाकिनं लुण्ठितवैभवं तं
पराजितं नष्टबलं वराकम् ।
कारामुपानीय हतं विपन्नं
विलोक्य गङ्गाऽऽकुलिता बभूव[१] ।।१२।।

सा पलाशस्थली युद्धभूमायिता
भग्नदेहैरसंख्यैः शवैः पूरिता ।
अस्त्र-शस्त्र-प्रहारैर्मुहुर् धर्षिता
रक्तपातैर् भृशं क्लिन्नतां प्रापिता ।।१३।।

रक्तपुष्पैः पलाशैः समाच्छादिता
मङ्गला या मनोहारिणी सैव हा !
रक्तधाराप्रवाहैः कुरूपा सती
काकगृध्रैः शृगालैरभूत् सङ्कुला ।।१४।।

उखाड़ फेंकने में जुट गये। उसके सेनापति को उन्होंने मिला लिया। फलस्वरूप सिराजुद्दौला बुरी तरह हार गया और क्लाइव ने विजय प्राप्त की। यद्यपि यवन नबाब युद्ध कुशल था और उसके पास पर्याप्त सैन्य बल था तथापि अपनों के द्वारा विद्रोह किये जाने के कारण पराजित उसे बन्दी बना लिया गया और उसकी हत्या कर दी गई। ऐसे विपन्न राजा को देखकर गङ्गा व्याकुल हो गई।यह युद्ध प्लासी युद्ध के नाम से जाना जाता है। जो प्लासी पलाश पुष्पों से लाल दिखती थी , वह खून से लाल हो गई। शवों से पूरित होकर कौवों और

defeated and Clive became victorious. The *Nawāb* was a good warrior and had enough soldiers yet was routed in the battle because he was double-crossed by his own men. He was imprisoned and put to death, an incident which annoyed *Gaṅgā* very much. It was the famous battle of *Plāssi*. It was the same *Plāssi* which once flourished with red *palāśa* flowers was soaked in blood. The place was covered with mangled corpses and

भेदनीत्या समुन्मूलिताः शासकाः
पारतन्त्र्याऽन्धकारेऽवलीढा नराः ।
हा! स्वतन्त्रत्वरूपोज्ज्वलोऽर्कस्तदा
भारतेऽस्तङ्गतो दीर्घकालावधिम् ।।१५।।
एतदुत्थानपातं क्रमेणाऽऽगतं
वीक्षमाणोद्गमादासमुद्रं सदा ।
पुत्रकाणां गुणान्दोषजातोभयं
प्रेङ्खती स्वर्धुनी याति रात्रिन्दिवम् ।।१६।।
रामकृष्णोपदेशामृतं पावनं
पाययन्ती स्वतोयेन सम्मिश्रितम् ।
जीवयन्तीव तावद् विपन्नाः प्रजा
बङ्गभूमिं समासादिता पुण्यदा ।।१७।।
मातरं सारदां सत्त्वशीलां तथा
भारतं दीपयन्तं नरेन्द्रं सुतम् ।

चीलों द्वारा ढक ली गई।।७-१४।।

भारतीय शासक भेदनीति (फूट) से उखाड़ दिये गये और सभी लोग परतन्त्रता के गहन अन्धकार में डूब गये। भारत में बहुत दिनों के लिए स्वतन्त्रता का सूरज डूब गया। क्रमशः इस उत्थान पतन को देखती हुई श्रीगङ्गा समुद्रपर्यन्त बहती रही। उन्होंने अपने ही पुत्रों के दोषों और गुणों को इसका कारण माना और रात-दिन अपने कर्तव्य में लगी रहीं । विपत्ति ग्रस्त प्रजा को अपने जल में मिश्रित रामकृष्ण परमहंस के पावन उपदेशामृत को पिलाती हुई वे बंगभूमि में आईं। मां सारदा

ridden with crows and vultures.[7-14]

The policy of divide and rule ousted the Indian rulers and everybody sank in the darkness of slavery. The sun of freedom disappeared for a long time. *Gaṅgā* has ever been a witness to the rise and fall of Her sons. She has perennially flown to the ocean accepting the fact that it is the nature of their action which has determined their fate.She has come to *Baṅgabhūmi* nourishing the imperilled subject with Her water, saturated with the holy

तं विवेकेन पूर्णं सदाऽऽनन्दितं
यत्र सास्मर्यते बङ्गभूमौ मुदा ।।१८।।
ब्रुवन्तमुत्तिष्ठत जाग्रतेति स्वधर्मरक्षाव्रतिनं महान्तम् ।
विवेकिनं ज्ञं कृतिनं विवेकानन्दाभिधेयं स्मरतीह गङ्गा ।।१९।।
यावन्न लक्ष्यं त्वधिगम्यते स्वंतावत्प्रयान्तु प्रयता युवानः।
इतीरयन्तं सततं विवेकानन्दाभिधेयं सुपथं नयन्तम् ।।२०।।
हिन्दुत्वभावं प्रतिबोधयन्तं वैराग्यमादाय परिव्रजन्तम् ।
स्वसंस्कृतेरुन्नयनं चिकीर्षुं वेदान्तिनं भारतभूषणं तम् ।।२१।।
अज्ञाननिद्राहतचेतनानाम् उद्बोधने तत्परमानसञ्च ।
साक्षात्कृतात्मानमहो ! विवेकानन्दाभिधेयं श्रुतिसारविज्ञम् ।।२२।।
दीक्षां गृहीत्वा किल रामकृष्णाद्
ऐच्छत् समन्ताद् नव जागृतिं यः।
देशे-विदेशे भ्रमणं चकार
स्वधर्मनिष्ठाभ्युदयाय सम्यक् ।।२३।।

तथा नरेन्द्र विवेकानन्द को वे सदा याद करती हैं।।१५-१८।।

"उठो जागो लक्ष्य की पूर्ति होने तक मत रुको" – ऐसा कहने वाले विवेक से परिपूर्ण विवेकानन्द को श्रीगङ्गा यहां याद करती हैं; जो हिन्दुत्व जगाने वाले, विरागी साधु , अपनी संस्कृति का उन्नयन करने के इच्छुक , वेदान्त मर्मज्ञ , भारत के भूषण हैं; जो अज्ञान रूपी गाढ निद्रा से आहत चेतना वालों का उद्बोधन करने में लगे हैं, आत्मसाक्षात्कार कर्ता हैं और वेदों के रहस्य को जानते हैं ; रामकृष्ण परमहंस से दीक्षा लेकर जिन्होंने चारों ओर नव जागरण का आह्वान किया और

precepts of *Śrī Rāmakṛṣṇa Paramhaṅsa*. She has ever remembered Mother *Sāradā* and *Narendra-Vivekānanda*.[15-18]

She reminisces the latter's outstanding rousing call,"Arise awake, stop not until the goal is reached." He is the detached *sanyāsi* who has worked to awaken the real spirit of Hinduism. He has been desirous of bringing about a revival of his own culture. He has been a great knower of the quintessence of the *Vedas*. He stands as a precious jewel embellishing Mother India. After getting indoctrinated by *Śrī Rāmakṛṣṇa Paramhansa* he toiled

कन्याकुमारीं समवाप्य धीरः सदा वितर्कार्णवमज्जितः सन् ।
अपश्यदेकाग्रमना मनस्वी पयोनिधेरेव तरङ्गभङ्गान् ।।२४।।

क्षुधां पिपासां परिहाय कामं
शिलोपविष्टो दिवसत्रयं सः ।
निनाय देशे ह्यनुरक्तचित्तः
विचारमग्नो करुणो विरक्तः ।।२५।।

धर्मप्रकाशेन कथं समस्ता
आलोकिता भारतवासिनः स्युः।
सन्देहपङ्कात् कथमुत्तरेयुः
स्वातन्त्र्यसौख्यं कथमाप्नुयुस्ते ।।२६।।

इति प्रकृष्टेन विचारणेन
प्रबोधितोऽसौ सहसा महात्मा ।
उत्थाय तत्प्रस्तरखण्डभागाद्
उत्थापनं सत्त्वरमाचकांक्ष ।।२७।।

अपने धर्म के प्रति निष्ठा उत्पन्न करने के लिए देश-विदेश में भ्रमण किया ।धीर विवेकानन्द कन्याकुमारी में पत्थर पर बैठ कर वितर्क के समुद्र में डूबे हुए एकाग्रचित्त होकर समुद्र की लहरों को देखते रहे। वे भूख - प्यास छोड़ कर तीन दिन उस शिला पर बैठे रहे। देश प्रेम से पूर्ण , करुण और विरक्त वे विचारों में डूबे रहे। समस्त भारत वासी धर्म के प्रकाश से आलोकित कैसे होंगे, सन्देह रूपी कीचड़ से उनका उद्धार कैसे होगा, उन्हें स्वतन्त्रता का सुख कैसे मिलेगा - इस प्रकृष्ट चिन्तन में वे डूबे थे; सहसा उन्हें प्रबोध हुआ। तब उसी शिला से उठकर

for the renaissance of India. He travelled far and wide to generate a sense of reverence in others for his religion. *Swāmī Vivekānanda* sat composed on a rock at *Kanyākumarī* and looked at the sea with concentration. He plunged in an ocean of contradictory thoughts totally forgetting hunger and thirst. He sat for three days on that rock, sad and yet detached. He remained engulfed by the sombre patriotic thoughts as to how the entire India would be enlightened by the true messege of *Dharma*; how would they be retrieved from the grime of superstition. Suddenly

ततः समस्तानपि भारतीयान् उत्तिष्ठ चात्मानमवेहि नूनम्।
उदीरयामास गभीरघोषं सहोत्थितैरेव समुद्रघोषैः ।।२८।।
आनन्दरूपो निजबोधयुक्तः ततः 'शिकागो' इति नामधेये।
देशे समायोजित-विश्वधर्मसम्मेलनेऽगात् तपसा प्रदीप्तः।।२९।।
स्वधर्ममाश्रित्य समग्रलोकाः क्षेमं लभन्तामिति भाषमाणः।
वेदान्तसिद्धान्तमतिप्रकृष्टं प्रस्तूय विश्वं चकितं चकार ।।३०।।
वैष्णवानां हरेर्नामसङ्कीर्तनं
श्रृण्वती नित्यमानन्दिता वैष्णवी ।
शक्तिरूपा स्वयं तान्त्रिकैः सम्मतां
शक्तिपूजामिह प्रेक्षमाणाऽऽगता ।।३१।।
उन्नतं नागरीसभ्यतासंयुतं
तं समुद्योगवन्तं विकासोन्मुखम् ।

उन्होंने शीघ्र ही लोगों को जगाना चाहा। वहीं से उन्होंने सभी भारतीयों को 'उठो! अपने को अब पहचानो' कहकर समुद्र के उद्घोष के साथ-साथ अपने उद्घोष को एकाकार किया। तब आनन्द स्वरूप आत्मबोध से युक्त वे शिकागों में आयोजित विश्व-धर्म सम्मेलन में भाग लेने गये।सभी लोग अपने-अपने धर्म का आश्रय लेकर कल्याण को प्राप्त करें - इस उत्कृष्ट वेदान्त सिद्धान्त को प्रस्तुत कर उन्होंन विश्व को चकित कर दिया ।।१९-३०।।

वैष्णवी गङ्गा वैष्णवों (गौड़ीय सम्प्रदाय) के हरिनाम सङ्कीर्तन को सुनती हुई आनन्दित होती हैं और तान्त्रिकों की शक्ति पूजा को देख स्वयं शक्ति स्वरूपा यहां आईं हैं। आज कल वे बंगाल को नगरीय सभ्यता से पूर्ण उन्नति शील, उद्योगों से

he experienced enlightenment. He wanted to awaken people. He gave his clarion call to every Indian, 'awake and know thyself ', which resounded with the uproar of the sea. He went to participate in the World Conference of Religions at *Chicago*. He astounded the entire world by propounding the great *Vedic* insight, 'let everyone be enlightened by following his own faith, i.e. *Dharma*.'[19-30]

*Vaiṣṇavi Gaṅgā* feels thrilled to hear the *Harināma* chanting by the *Gaudiya Vaiṣṇava* community. In the mordern

वाहनानाञ्च कोलाहलेनाऽऽकुलं
साम्प्रतं प्रेक्षते बङ्गदेशं ननु ।।३२।।
गङ्गा बङ्गरविं रवीन्द्रममितख्यातं कवीन्द्रं तथा
विद्यासागर-राममोहनसमान् सामाजिकोन्नायकान् ।
अप्यन्यानरविन्दघोषविबुधान् वैज्ञानिकं तं वसुं
स्मृत्वा नूतनजागृतिं पुनरपीच्छन्तीव संलक्ष्यते ।।३३।।
अत्र गङ्गा स्वधारां द्विधा कुर्वती
दृश्यते शस्यसम्पत्करी ऋद्धिदा ।
बङ्गदेशं सुवर्णं प्रियं वीक्षितुं
वाञ्छतीव प्रसारं समन्तात् स्वकम् ।।३४।।
पूर्वबङ्गं परिप्लावितुं दक्षिणां-
पूर्वमाशां गता या विशाला नदी ।

भरे तथा विकास करते हुए, वाहनों की भीड़-भाड़ से भरा हुआ देखती हैं। गङ्गा बङ्गाल के सूर्य कवीन्द्र रवीन्द्र, ईश्वरचन्द्र विद्यासागर, राजाराम मोहन राय जैसे समाज सुधारकों, महर्षि अरविन्द जैसे विद्वानों तथा जगदीश चन्द्र वसु जैसे वैज्ञानिकों का स्मरण करती हुई आज फिर अपने प्रदूषण के निरास के लिए पुर्नजागरण की इच्छुक सी लग रही है। यहां गङ्गा अपनी धारा को दो भागों में बांट लेती है। सस्य सम्पत्ति और समृद्धि को देने वाली वह मानो अपने सोना बांग्ला को चारों ओर से देखने के लिये फैलना चाहती हों । जो विशाल नदी पूर्व बंग को सींचने के लिये दक्षिण पूर्व दिशा की ओर बहती है वह पद्मा नाम से विख्यात है

times She finds Bengal to be the epitome of city culture. Traversing the soil of illustrious people reformers, philosophers and scientists like *Tagore*, *Vidyāsāgar*, *Rājā Rām Mohan Roy*, *Aurobindo*, *J. C. Bose* and others *Gaṅgā* yearns to enter a new era of renaissance again and be pollution free. Here *Gaṅgā* splits Her waters into two streams. This bestower of benedection in the form of wealth and prosperity seems as if eager to spread around to have a look of Her '*Sonār Baṅgla*', i.e. the golden Bengal. The gigantic river which flows south-east ward to irrigate the eastern

सैव पद्माभिधानेन विज्ञायते
प्रेक्षितुं पद्मनाभं समुद्रोन्मुखी ।।३५।।
छिन्नमेतत् प्रियं भारताङ्गं धुनी
वीक्षती दुःखिता कोमलाऽन्तर्मना ।
भारतीयाऽपि साऽभारतीयाऽधुना
मन्यते नूनमात्मानमत्राऽऽगता ।।३६।।
प्राणघातं प्रजानां महाकष्टदं
क्रूरतामत्र सा प्रेक्षमाणा सती ।
सा व्यथाव्याकुला स्वर्धुनी संततं
दुःखपूरप्रवाहैर्युता लक्ष्यते ।।३७।।
सर्वथा त्रासितान् कुप्रहारैर्हतान्
निर्दयैर् हन्त ! निष्कासितानालयात् ।
पोष्यमाणान् पयोभिः प्रियान् पुत्रकान्
वत्सला वीक्ष्य विस्थापितान् रोदिति ।।३८।।

वह पद्मनाम विष्णु को देखने के लिए समुद्र की ओर जा रही है। भारत के अङ्ग को छिन्न हुआ देख (पूर्वी पाकिस्तान/बांग्ला देश के रूप में कटा हुआ देख) कर कोमल मन वाली गङ्गा बड़ी दुःखी है और भारतीय होते हुए भी स्वयं को यहां पर अभारतीय मान रही है। यहां पर की गई उन्मादी क्रूरता से प्रजा को जो कष्ट मिल रहा है उसे देखकर स्वर्धुनी मानों दुःख के पूरप्रवाह से भरी है। सब प्रकार से सताये गये, भयङ्कर प्रहारों से मारे गये और निर्दयों द्वारा घर से निकाल दिये गये उन विस्थापित पुत्रों को देखकर गङ्गा रोती है, जिन्हें उसने अपने जल से पोषित किया है।।३१-३८।।

part of Bengal is renowned as *Padmā*. It seems she flows forward to the ocean to meet *Padmanābha Viṣṇu*. The tender-hearted river *Gaṅgā* is sad to see the dismembered *Bhārata*. She feels here to be an alien. She is deeply anguished to see the prevailing religious intolerence and the torture inflicted on the minorities whom once upon a time She had nourished.[31-38]

विश्रुताद् मानसादुद्गतोऽसौ नदः
कामरूपं परिक्लेदयन्नागतः ।
यामुनाख्यां भजन् ब्रह्मपुत्रस्त्विमां
दीर्घकायस्तरङ्गायितः सङ्गतः ।।३९।।
किञ्च, मेघालयस्योन्नतात् पर्वतात्
प्रस्नुता मेघनाप्यत्र पद्मां गता ।
सर्वसंयुक्तधाराः ततः मेघना-
नामिकैवाऽम्बुधिं गन्तुकामाः स्मृताः।।४०।।
तामपाराम्बुसंघातरूपां नदीं
दृश्यमानामगाधां समुद्रोपमाम् ।
नैकवाणिज्यपोतैः सदाऽऽलोडितां
सङ्गमय्य प्रसन्नोऽभवत् सागरः ।।४१।।
भिद्यमानाऽत्र भागीरथीसंज्ञया
भूषिता सर्वलोकार्चिता वन्दिता ।

प्रसिद्ध मानसरोवर से उद्गत, आसाम की भूमि को सींच कर आये, जिसका दैशिकनाम यमुना है,वह ब्रह्मपुत्र नद अपने विशाल स्वरूप से तरङ्गायित होकर पद्मा में मिल जाता है और मेघालय के ऊंचे पहाड़ों से स्रुत मेघना नदी भी इसमें मिलती है। यहां से यह संयुक्त धारा मेघना ही कहलाती है और सागर में मिलने के लिये आगे बहती है। यह धारा अपार जल राशि से पूर्ण हो जाने पर स्वयं समुद्र सी लगती है, अनेक जहाजों से भरी रहती है। ऐसी नदी को मिला कर सागर प्रसन्न

Sprung from the celebrated *Mānasarovara* and having irrigated the land of *Āssam*, the river *Brahmaputra* known as *Yamunā* around the region, agitated by waves merges in *Padmā* along with its magnificent form. The river *Meghnā* too descending down from the high mountains of *Meghālaya* gets united with this river. Henceforth this synthesis of the rivers is known as *Meghnā* alone and moves forward to blend with the sea. This stream overflows with abundance of water and resembles the sea itself. Many ships navigate in it. The sea seems

पश्चिमं बङ्गमाप्याययन्ती वरा
राजते गाङ्गधाराऽपरा पुण्यदा ।।४२।।
पश्चिमे बङ्गभागे तु नैका पुरः
सिञ्चती मेलयन्ती विभिन्ना नदीः ।
रोधसि प्रेक्षते निर्मिताः शोभनाः
सर्वसौविध्यपूर्णा नवाट्टालिकाः ।।४३।।
तार्किकं चिन्तनं प्रस्तुवन्तीं गिरं
तां नवीनामवच्छेदकेनाऽऽवृताम् ।
हेतुना साध्यसिद्धिं तथा पक्षतां
न्यायवाक्यं प्रतिज्ञादिकं पञ्चकम् ।।४४।।
सूक्ष्मचिन्तापरं शास्त्रमेतन्नवं
कर्कशं श्रोतुकामेव दृश्याऽमला ।
न्यायभूमिं नवद्वीपमासादिता
सा विचारप्रवाहात्मिका मञ्जुला ।।४५।।

होता है। जो दूसरी विभक्त धारा है, वह भागीरथी कहलाती है, जो सभी लोगों द्वारा पूजित और वन्दित है तथा पश्चिम बंगाल को सींचती है। वह यहां अनेक नगरों को सींचती हुई विभिन्न नदियों को मिलाती हुई आगे बढ़ती है । इसके तट पर विशाल अट्टालिकायें खड़ी हैं जो सब प्रकार की सुख सुविधाओं से परिपूर्ण हैं।।३९-४३।।

तार्किक चिन्तन को प्रस्तुत करने वाली नव्यन्याय की अवच्छेदकावच्छिन्न से युक्त भाषा वाले, हेतु से साध्य की सिद्धि, पक्षता, प्रतिज्ञादि पञ्चावयव वाक्यों से युक्त,सूक्ष्म चिन्तन वाले शास्त्र को सुनने के लिए विचार प्रवाह से परिपूर्ण सुन्दर

to be exalted by associating with such a grand river. The other stream which has branched out is the river *Bhāgīrathī*. She is praised and worshipped by everyone. This river moistens West Bengal. It unites with many other rivers and irrigates many cities. Grand palaces stand on her bank which enjoy affluence.[39-43]

*Gaṅgā* bearing the stream of ideas now enters *Navadwīpa* (*Nadiā*), the study centre of *Nyāya-Śāstra*. She is curious to listen to the subject presented through a special terminology, i.e.

'काव्येषु कोमलधियो वयमेव नाऽन्ये
तर्केषु कर्कशधियो वयमेव नाऽन्ये'।
उद्घोषमेतदमितं किल तार्किकाणाम्
आकर्ण्य तुष्टहृदया प्रतिभाति गङ्गा ।।४६।।
न्यायप्रकर्षलसितां रचनां स्वकीयां
गङ्गाजलेऽर्पयति दीधितिकारहेतोः ।
यस्तं सदा प्रमुदितं भजनाऽनुरक्तं
दृष्ट्वाऽतिविस्मितमना प्रतिभाति गङ्गा ।।४७।।
नैयायिकं हरिगुणाननुकीर्तयन्तं
राधावतारमतुलं मृदुलस्वभावम् ।
दृष्ट्वा महाप्रभुमलौकिकदीप्तिमन्तं
हृष्टा पुरा सुरधुनी तरलैः तरङ्गैः ।।४८।।
अत्रैव सा ललितलास्यलयाऽनुविद्धं
माधुर्यधुर्यलसितं कमनीयकाव्यम् ।

गङ्गा ने न्याय की भूमि नवद्वीप (नदिया) में प्रवेश किया। काव्य के सन्दर्भ में कोमल बुद्धि वाले हम (तार्किक) ही हैं और तर्क में कर्कश बुद्धि वाले भी हम ही हैं –नैयायिकों के इस उद्घोष को सुनकर श्रीगंगा सन्तुष्ट होती हैं। यहीं जो दीधितिकार रघुनाथ शिरोमणि के कहने पर न्याय शास्त्र की उत्कृष्ट रचना को गङ्गा जल में डुबो देते हैं, उन सर्वदा प्रसन्न रहने वाले भजनानुरागीचैतन्य महाप्रभु को गङ्गा आश्चर्य चकित हो देखती हैं। हरि नाम सङ्कीर्तन करने वाले, न्यायशास्त्र विशारद, श्रीराधा के अवतार, कोमल स्वभाव वाले, अलौकिक दीप्तिमान् चैतन्य

.*avachhedakāvachhinna*. Inference of *sādhya* (major term) by *hetu* (middle term), *pakṣatā* (minor term), *pratijñādi-pañchāvayava* (syllogism), the diffrent features of *Nyāya* are also appreciated by *Gaṅgā*. She is pleased to hear the bold statement of the logicians that in the field of creative writing, i.e. poetry, they have soft ideas and in the field of dialectics they are only harsh debators. Here *Gaṅgā* looked amazed at *Chaitanya Mahāprabhu*, a great devotee, dwelling in eternal happiness. She happenes to be delighted to see him (*Chaitanya*) who was a great scholar of

नानाविलासभरितं प्रणयेन सिक्तं
श्रुत्वाऽञ्चिता सुरधुनी जयदेवगीतम् ।।४९।।
गोविन्दकेलिकुतुकं रुचिरं सुवर्णैः
यद् व्यञ्जकं रतिसुखस्य हरिप्रियायाः।
शृङ्गाररससारसुभगं सुकुमारपद्यं
श्रुत्वाऽञ्चिता सुरधुनी जयदेवगीतम् ।।५०।।
रासेश्वर-प्रचुरकाम-कलावितान-
ध्यान-प्रगानकुशलः खलु विष्णुकामः।
साक्षात्करोति सुकृती रसराजतत्त्वं
नित्यं कथं न पुलकाञ्चितरोमराजिः।।५१।।

महाप्रभु को देख स्वर्ग की नदी गङ्गा बड़ी प्रसन्न हुईं।।४४-४८।।

यहीं (नवद्वीप में ही) ललित लास्य और लय से युक्त, माधुर्य की पराकाष्ठा से सुशोभित, नाना विलास से भरे, प्रेम से सिक्त जयदेव के कमनीय काव्य 'गीत गोविन्द' को सुनकर श्रीगङ्गा रोमाञ्चित हो आगे बहती हैं। जो गोविन्द की कामकेलि के कौतूहल से भरा, हरिप्रिया श्रीराधा के रतिसुख का अभिव्यञ्जक है; उस शृङ्गार के सार, सुभग और सुकुमार पद्य को सुनकर वे रोमाञ्चित हो जाती हैं। रासेश्वर श्रीकृष्ण के प्रचुर-काम कला के विस्तार का ध्यान और गान करने वाला साधक स्वयं विष्णुकाम हो जाता है अर्थात् उसकी समस्त कामनाओं का लय हो जाता है। वह पुण्यात्मा पुलकित रोमों वाला होकर भला उस रसराज के तत्त्व का साक्षात्कार क्यों न करे?।।४८-५१।।

*Nyāyaśāstra*, he who drowned his original writings into *Gaṅgā*, for the welfare of *Dīdhitikāra Raghunātha Śiromaṇi*. He, the incarnation of *Rādhā* was soft-hearted and kept on chanting *Harināma*, thus possessing ethereal glow.[44 -48]

At *Navadwīpa Gaṅgā* Herself is thrilled to listen to the extremely sonorous, erotic amorous, tender poetical work *Gītagovinda* by *Jaideva*. It reflects the eros of both *Govind* and *Rādhā*. The devotee meditating upon the ecstatic union of the celestial lovers himself becomes *Viṣṇu-kāma* – one who is desirous of *Viṣṇu* and hence becomes liberated from the bondage of desires.[48-51]

व्यापारेण प्रचुरविभवोऽभूत् समृद्धः सुरम्यः
सप्तग्रामो विकसिततरः चारुशोभायमानः ।
वृक्षैर्युक्तं स्थलमिह पुरासीदरण्यप्रदेशः
तत्र प्राप्ता सुरसरिदसौ गां परिप्लावयन्ती ।।५२।।
किञ्चिदध्वानमग्रे प्रयान्ती सती
ग्राम्यपौरान् जनान् पाययन्ती पयः।
दैशिकीं नूतनाख्यामवाप्य स्मृता
तत्र 'हुग्ली'[३] ति लोकप्रिया साम्प्रतम्।।५३।।
एकरूपा त्रिरूपाऽभवत् सा पुन-
र्व्यत्ययोऽयं परं विस्मयोत्पादकः ।
सङ्गता याः प्रयागे प्रसीदन्त्यहो!
ता वियुक्ताः किमु व्याकुला सन्ति नो? ।।५४।।
सङ्गमे विप्रयोगे त्रिवेणीति ताः
कथ्यमाना नरान् पावयन्त्यम्भसा ।
युक्तवेणी प्रयागे प्रसिद्धास्तथा
मुक्तवेणीह बङ्गे परिज्ञायते ।।५५।।

इसके बाद गङ्गाजी सप्तग्राम आती हैं जो पहले वैभव सम्पन्न,-समृद्ध, विकसित और शोभा सम्पन्न था। उसके बाद गङ्गा जी पृथ्वी को सींचती हुई, गांव और नगर वासियों को जल पिलाती हुई जब हुग्ली आईं तो उनको भी लोगों ने हुग्ली नाम दे दिया। कुछ आगे बढ़कर वे पुनः तीन भागों में बंट गईं । यह उलटवासी बड़ी आश्चर्यकारी है । जो प्रयाग में मिलकर प्रसन्न हुई थीं वे ही तीन धारायें यहां अलग होकर क्या व्याकुल नहीं होतीं? संगम हो या विप्रयोग दोनों स्थानों पर वे त्रिवेणी

Later She reaches *Saptagrāma*, which once upon a time was prosperous developed and richly endowed. There from she (*Bhāgīrathī*) irrigating the land and quenching the thirst of innumerable creatures has travelled to *Hooghly* from where she has acquired the name *Hooghly*. After travelling for some distance she has again split into three shoots. It is an interesting paradox that those three streams which had once happily joined together at *Prayāga* have got at present dissociated here. Won't

पश्चिमाशामभिप्रावहद् या सरित्
संविभक्ता सती सैव सारस्वती ।
पूर्वदिग्गामिनी याऽपरा निम्नगा
यामुनी तावदिच्छामती सा मता ।।५६।।
या तृतीया त्ववाचीं प्रति प्रस्थिता
मुख्यशाखेह 'हुग्लीति' भागीरथी ।
सा प्रयाता ततः कालिकातापुरीं
रामकृष्णेश्वरीं कालिकामर्चितुम् ।।५७।।

अचिन्त्यचित्स्वरूपिणीमनन्तमूर्तिरूपिणीम् ।
अजेयशक्तिशालिनीमभीष्टसिद्धिदायिनीम् ।।५८।।

कहलाईं। प्रयाग में युक्त त्रिवेणी और यहां बंगाल में मुक्त त्रिवेणी के नाम से जानी गईं। उनमें सरस्वती नाम की धारा पश्चिम दिशा की ओर बही और जो पूर्वदिशा की ओर आई वह भागीरथी रूपी मुख्य शाखा हुग्ली कहलाई। वहां से वह कलकत्ता शहर में गई राम कृष्ण परमहंस की इष्टदेवी कालिका की स्तुति करने के लिए ।।५२-५७।।

श्रीगङ्गा स्तुति करती हैं- जो अचिन्त्य् चित् स्वरूपा हैं, अनन्त मूर्तिरूपा हैं, अजेय शक्तियों से युक्त हैं, अभीष्ट मनोवाञ्छित सिद्धि प्रदान करती हैं; हाथ में

the separation pain the three streams? At both the places they have been called the *Triveṇī*, whether it is a confluence or a parting. At *Prayāga* she is known as united *Triveṇī* and here at Bengal she has been known as the liberated *Triveṇī*. Out of these three streams *Saraswati* flowed westward, the stream of *Yamunā* which went eastward came to be named *Ichhāmatī*. The third stream descending southward was the main river *Bhāgīrathi*, which came to be known as *Hooghly*. From there she reached *Calcutta* to pray *Rāmakṛṣṇa*'s *iṣṭadevi Kālikā*. *Gaṅgā* sends Her prayers to *Kālikā* thus:[52-57]

"The one who is pure consciousness and remains beyond knowledge, one who reveals Herself eternally, is fraught with

करे कृपाणधारिणीं कपालमालशोभिनीम् ।
कराल-कालरूपिणीं नमामि कालिकेश्वरीम् ।।५९।।
गिरीन्द्रनन्दिनीं गिरिस्थितां गिरीशगेहिनीम् ।
गिरामगोचरां गुहाम्बिकां गजाननान्विताम् ।।६०।।
जपाप्रसूनमालिनीं जपादिभिः समर्चिताम् ।
जगद्धितां जयश्रियोज्ज्वलां जगन्मयीं भजे ।।६१।।
त्रिलोचनां त्रयीस्वरूपिणीं तुरीयरूपिणीम् ।
त्रितापहारिणीं तमोविनाशिनीं तमोमयीम् ।।६२।।
निजप्रकाशरूपिणीं निरञ्जनीं नगेश्वरीम् ।
नभोङ्गणे निवासिनीं नतार्तिनाशिनीं नुमः ।।६३।।

खड्ग लिए हैं, कपाल(मुण्ड) माला पहने हुए हैं, भयंकर काल के रूप में हैं,उन महाकाली को मैं प्रणाम करती हूँ। जो गिरिराज हिमालय की पुत्री , पर्वत में रहने वाली, शंकर की गृहिणी, वाणी की अविषय,गुह अर्थात स्कन्द की तथा गणेश जी की माता हैं, जपा कुसुम (अड़हुल ) की माला पहने हुए तथा जप आदि से अर्चित हैं, जगत् का हित करने वाली हैं और विजय श्री से सुशोभित हैं; तीन नेत्रों वाली, वेद स्वरूपा, तुरीय रूपा, आधिदैविक – आधिभौतिक – आध्यात्मिक तापों को दूर करने वाली, अज्ञान का नाश करने वाली और तमोमयी हैं। जो स्वयं प्रकाश

nvincible powers and bestows the desired fulfilment. She holds a scimitar in Her hand and wears the garland of skulls. She is Death incarnate (*Kālarūpiṇī*). I bow to Her. She is the daughter of *Girīndra* and a dweller of the mountain (*Himalaya*). She is the consort of *Girīśa* and is beyond the grasp of human discourse. She is the mother of *Skanda* and *Ganeśa*. She wears the garland of hibiscus (*Javāpuṣpa*). Worshipped and venerated by devotees, She showers Her kindness upon the entire universe. She is the goddess of victory. She bears three eyes and is *Veda* incarnate. She is the state of final union of the soul with the Supreme Spirit, the redeemer of the three-fold sufferings, the destroyer of ignorance and sloth. She is Herself the eternal darkeness (*Tamomayī*). She is light and purity personified. She is *Nārāyaṇī*.

प्रचण्डचण्डघातिनीं प्रमत्तमुण्डपातिनीम् ।
प्रदृप्तसैरिभार्दिनीं परात्परां प्रबोधिनीम् ।।६४।।
भवान्तकारिणीं भवप्रियां भयापहारिणीम् ।
भुजङ्गभूषणां विभूतिभूषितामहं भजे ।।६५।।
मुनीन्द्रवृन्दमानसे मरालिनीं महेश्वरीम् ।
मिलिन्दगुञ्जनानुकारि-मञ्जुशिञ्जिनीं नुमः ।।६६।।
शचीन्द्रसेविता शुचीन्द्रियैः सुपूजिता शिवा ।
शुचिस्मिता शुचिव्रता शिवाय मेऽस्तु सर्वदा ।।६७।।
सा तु सारस्वती भूमिभागान् बहून्
सिञ्चती सङ्गतागत्य 'हुग्लीं' पुनः।

रूपा हैं, निरञ्जनी और नारायणी हैं, आकाश रूपी आंगन में निवास करती हैं तथा नत लोगों के दुःख का नाश करने वाली है । प्रचण्ड चण्ड तथा मदोन्मत्त मुण्ड को मार गिराने वाली हैं और दर्प वाले महिषासुर का मर्दन करती हैं, परात्पर ज्ञानस्वरूपा हैं; संसार का अन्त करने वाली, शिव जी की प्रिया , भय को दूर करने वाली, सांपों का आभूषण तथा भस्म का लेप लगाने वाली हैं; श्रेष्ठ मुनिजनों के मानस रूपी मानसरोवर में हंसिनी के समान विराजमान, महेश्वरी, भ्रमरों के गुञ्जन का अनुकरण करने वाली, पायल की झङ्कार वाली देवी को मैं नमस्कार करती हूं । शची और इन्द्र द्वारा सेवित, पवित्र इन्द्रियों वाले साधकों द्वारा पूजित, पवित्र मुसकान वाली, पवित्र व्रत वाली शिवा सदा मेरा कल्याण करें।।५८-६७।।

सरस्वती की वह धारा अनेक भूमिभागों को सींचती हुई पुनः सांकराइल नामक

She resides in the space of the skies and uproots the sufferings of those who seek Her protection. She destroys fearsome *Chaṇḍ* and the haughty *Muṇḍa* and tramples down proud *Mahiṣāsura*. She is transcendental knowledge. She brings the creation to an end and is the beloved of *Śiva*. She despels fears. Snakes happen to ornament Her and She smears Herself with ash. She dwells in the spiritual awareness of the great saints as a swan swims in a lake. She is the great goddess whose anklets imitate the humming resonance of the bees. I bow to such a power. She is served by *Śachī* and *Indra* worshipped by the saints with purest thoughts. She has the purest smile. Let such *Śivā* ever be kind to me."[58-67]

That shoot of *Saraswatī*, irrigating many regions again meets

तोयमार्गेण वाणिज्यसम्पादनं
भूयशः प्रागभूदत्र नद्याः किल ।।६८।।
शोकरूपो विहारप्रदेशं प्रति
क्रोशमानश्च सीमान्तभागात्ततः ।
धावमानोऽत्र दामोदराख्यो नदः
सङ्गतस्तां तरङ्गैः समुद्वेलितः ।।६९।।
रूपनारायण-ब्राह्मणी-द्वारका
एवमन्याश्च नद्यो मिलन्त्यागताः ।
हे मयूराक्षि! हंहो हरिद्रे! शुभे!
एहि मामाह्वयन्तीव सन्दृश्यते ।।७०।।
संविभक्ताऽथ धारोपधारासु सा
जालरूपा सती प्रासरत् सर्वतः ।
द्वीपमापादयन्तीह नानामुखा
याति बङ्गोपपाथोनिधिं प्रत्यहो! ।।७१।।

स्थान में हुग्ली में मिल गई। इस नदी में पहले जल मार्ग द्वारा व्यापार होता था । जो विहार के लिये शोक रूप है वह दामोदर नद सीमान्त भाग से आवाज करता हुआ , लहरों से उद्वेलित हो दौड़ता हुआ हुग्ली नदी में मिलने के लिये ही यहां आता है । रूपनारायण, ब्राह्मणी, द्वारका, अजय, कोपाय आदि नदियां भी इसमें मिलती हैं। मयूराक्षी तथा हल्दी को भी वह बुलाती हुई सी दिखाई देती है। धाराओं, उपधाराओं में विभक्त होकर वह जाल जैसी चारों ओर फैल गई है और अनेक द्वीप

*Hooghly* at *Sāṅkarail*. This river once used to provide a trade route. The *Dāmodar* river, inauspicious for Bihar, rushes with thundering noise and the frenzy of its waves join with the river *Hooghly*. The rivers like *Rūpanārāyaṇa*, *Brāhmaṇī*, *Dwāraka*, *Ajay*, *Kopai* also unite with Her. She seems to be beckoning the rivers *Mayurākṣī* and *Haldi*. *Gaṅgā* spreads around as a network made of streams and their off-shoot tributaries. She forms deltas and goes towards the Bay of Bengal. Initially while descending down the *Himalaya Gaṅgā* has assimilated many rivers along Her course. Now while merging with

या हिमाद्रेः पयोधिं प्रति प्रस्थिता
मेलयन्ती विभिन्ना नदीः स्वात्मनि।
सैव बङ्गोपवारांनिधिं सङ्गता
तावदेकाप्यनेका भवन्ती मुदा ।।७२।।

क्वचित् प्रसूनं नवमल्लिकाया
विलोकयन्ती मधुमासकाले ।
अन्यत्र पुष्पं नवकर्णिकारं
कर्णावतंसायितुमिच्छतीव ।।७३।।

क्वचिद् रसालाङ्कुर-कण्टकानि
रोमाञ्चयन्ति प्रकृतिं वधूटीम् ।
अन्यत्र पुंस्कोकिल-षट्पदालिः
क्वणन्ति मञ्जु प्रणय - प्रगीतम् ।।७४।।

क्वचित् तटीं कुन्दरदावलीभिः
सुहासिनीं पश्यति वीचिनेत्रैः ।

बनाती हुई अनेक मुहानों वाली होकर बंगाल की खाड़ी की ओर आती है । जो हिमालय से चलकर अनेक नदियों को अपने में मिला कर आगे बढ़ती है, वही एक अब अनेक होकर बंगाल की खाड़ी में समुद्र से मिल जाती है।।६९-७२।।

गङ्गा वसन्त ऋतु में कहीं नवमल्लिका के फूल को देखती हुई और कहीं दूसरे स्थान पर नये कर्णिकार (कनैल) के पुष्प को मानों कर्णफूल बनाना चाहती है। कहीं आम्रमञ्जरियां प्रकृति वधूटी को रोमाञ्चित करती हैं और दूसरी जगह पुंस्कोकिल और भ्रमर-पक्तियां मधुर प्रेमगीत गाते हैं । कहीं- कहीं पर कुन्द पुष्पों की

the sea at the Bay of Bengal, She splits into manyfold streams.[69-72]

In the spring *Gaṅgā* desires to be aromatic by different flowers like the blooming *navamallikā*, *Kaner* (oleandar) etc. Somewhere the mango blossoms seem to render the entire nature thrilled and at some other place the cuckoo and the bees hum the songs of love. With the eyes of Her waves She observes the beauty of the gleaming jasmine (*Kunda*) flowers blooming along Her

वसुन्धरां सर्षपपुष्पपुञ्जैः
पीतोत्तरीयामिव राजमानाम् ।।७५।।
मनोज-बाणैरनलस्फुलिङ्गैः
पलाशपुष्पैः क्वचिदाकुलानि ।
सुशोभते रक्तिमरञ्जितानि
तटानि तोयैरुपशामयन्ती ।।७६।।
ग्राम्या नमन्ति प्रणमन्ति पौराः
तीर्थेषु तीरेषु तरीषु गङ्गाम् ।
पीताभवासा रसिकाः प्रहृष्टा
वासन्तिके पर्वणि चैत्रमासे ।।७७।।

निदाघकाले परितप्यमाना
वीचीषु तस्या अवगाहमानाः ।

दन्तपक्तियों से सुन्दर हास करने वाली तटी रूपी नायिका को यह अपनी लहररूपी आंखों से देखती है और सरसों के पीले फूलों की पीली ओढ़नी ओढ़े हुए वसुन्धरा को देखती है। कहीं आग की चिनगारी जैसे लाल कामदेव के वाणरूपी पलाश पुष्पों से व्याकुल तटों को जल से शान्त करती हुई सी लगती है। चैत के महीने में वसन्तऋतु के पर्वों में पीले वस्त्र पहन कर रसिक और प्रसन्न ग्रामीण और शहरी -दोनों तीर्थों , तटों और नावों में बैठकर गङ्गा की पूजा अर्चना करते हैं।।७३-७७।।

ग्रीष्म ऋतु में तपते हुए सभी प्राणी गङ्गाकी लहरों में डूब-डूबकर स्नान करके तथा अमृत जल को बार-बार पीकर स्फूर्ति को प्राप्त होते हैं। पर्वतों में गर्मी से

alluring bank. She admires the charming earth which wears the mantle of yellow mustard flowers. Sometime She seems to placate the shores aching with the inflamed *palāśa* flowers. They remind one of the sharp arrows of *Kāmadeva*. In the month of *Chaitra* to celebrate the spring, the multitude of men, both from the villages and the cities wear yellow attires and worship *Gaṅgā* variously.[73-77]

In the summer every creature feels refreshed to dip in and

स्फूर्तिं लभन्ते खलु जीवजाताः
सुधामयं वारि निपीय भूरि ।।७८।।
क्वचिद् हिमानी-द्रुतिमाप्य
गङ्गोच्छलत्तरङ्गैस्त्वरितप्रवाहा ।
अन्यत्र तन्वी क्लममन्थरेवा-
ऽऽतपेन तप्ता पुलिनेषु दृश्या ।।७९।।

दिवोम्बुविन्दून् क्वचिदाहरन्ती
विवर्तताटङ्क-विभूषितश्रीः ।
अन्यत्र भङ्गैः परिवर्धमाना
प्रतीयतेऽसौ ननु मुक्तकेशी ।।८०।।
क्वचिन्नयन्ती निखिलं तटानां
सीमामतिक्रम्य भयङ्करोर्मिः ।

बर्फ पिघलने पर गङ्गा उछलती लहरों से तेज गति वाली हो जाती है, किन्तु मैदानी क्षेत्र में वह थकी होने से मन्द गति वाली होकर धूप से सूख कर बालू में लेटी तन्वी सी लगती है।।७८-७९।।

एक जगह आकाश से गिरने वाली वर्षा की बूदों को लेकर कहीं वह विवर्त रूप कर्णाभरण से विभूषित शोभावाली लगती है, दूसरे स्थान पर लहरों से बढ़ती हुई वह बाल खोले काली के समान लगती है। कहीं भयंकर लहरों वाली सीमा का

drink the life-giving water of *Gaṅgā*. But the picture at the mountains is different. When the ice melts, due to heat *Gaṅgā* moves fast with Her rising waves but on the planes She gets tired; due to the heat Her pace is slow and She looks like a lean damsel lying in the folds of sand.[78-79]

She receives the drops of rain falling from the sky and gets swept by the whirlpools. She seems to be adorned with huge earrings of circular ripples. At some places She looks like *Kālī* with swept back locks of waves. Still at some other places She overwhelms the banks with Her ferocious waves and wipes out

अन्यत्र दत्त्वोर्वरतां पृथिव्यै
धावत्यसौ प्रावृषि तीव्रवेगा ।।८१।।

क्वचिच्च काशांशुकमादधाना
पद्माननामिन्दुमयूखगौराम् ।
प्रफुल्ल-पङ्केरुह-कुड्मलाक्षीं
शरद्वधूं पश्यति सा घनान्ते ।।८२।।
ज्योत्स्ना-वितानेन समुज्ज्वलायां
राका-रजन्यां स्मरतीव कृष्णम् ।
आनन्द-कन्दस्य महारसाब्धौ
निमज्जिता प्रेमपयःप्रवाहा ।।८३।।

अतिक्रमण कर तट पर स्थित फसलों, घरों आदि सम्पूर्ण को बहा ले जाती है और दूसरी जगह पृथ्वी को उर्वरता प्रदान करती हुई वर्षा काल में तीव्र गति से दौड़ती हैं।।८०-८१।।

कहीं काश पुष्प की ओढ़नी ओढ़े, कमलों के मुखवाली, चन्द्रमा की किरणों से गोरी, खिले हुए कमल पत्रों की आँखों वाली शरद् वधू को वह वर्षा के अन्त में देखती है। उस शरद् ऋतु में चन्द्रमा की चांदनी से उज्ज्वल पूर्णिमा की रात में वह (गङ्गा) श्रीकृष्ण का स्मरण करती हुई, प्रेम प्रवाह से भर कर आनन्द कन्द के महारास में मानो डूब जाती है।।८२-८३।।

habitats and crops. The same waves rushing wildly regenerate the fertility of the earth.[80-81]

At the end of the rains She feels the advent of the bride *Śarada* who is overladen with *kāśa* flowers. She possesses a face as beautiful as the lotus and is as fair as the moonbeam. She has the eyes like the blooming lotus petals. In the *Śarada* season She remembers *Śrī Kṛṣṇa* during the full moon night when the soft moon rays seem to turn everything into a translucent brightness. She like *Rādhā* plunges into the depth of *Mahārāsa* being surfeited by the thrall of love.[82-83]

क्वचिद् गते नीरवतां हिमाद्रौशृङ्गेषु नीहार-समावृतेषु ।
नारायणध्यानरता पवित्रा हेमन्तकाले प्रतिभाति गङ्गा ।।८४।।
अन्यत्र नित्यं कुरुते स्वभक्तान् प्रत्यूषकालेऽम्बुभिरार्द्रदेहान् ।
आमन्त्रयन्तीव तरङ्गहस्ता कूलेषु दृश्या नयनाभिरामा ।।८५।।

प्रभूतशीतेन जडः समस्तो लोकः शयानः शिशिरे निशायाम् ।
हिमालयादाजलधिं प्रयान्ती कदापि नो विश्रमते मनोज्ञा ।।८६।।
निरन्तरं कर्मरता भवेयुर्नरा व्यनक्तीति दिवानिशं नु ।
शीतोष्णभावान्सुखदुःखहेतूनतीत्य गङ्गा जयति प्रकृष्टा ।।८७।।
उद्गताऽनुक्षणं नूतनैर्वीचिभिः
सा पुराणी नवीनाऽविरामा वरा ।

हेमन्त ऋतु में हिमालय में चारों ओर नीरवता व्याप्त हो जाने पर और चोटियों के बर्फ से ढक जाने पर श्रीगङ्गा नारायण (बद्रीविशाल ) के ध्यान में निमग्न सी लगती है। मैदानी इलाके में वह भोर में अपने भक्तों को स्नान कराती है और लहरों रूपी हाथों से बुलाती हुई तटों पर बड़ी नयनाभिराम दिखाई देती है।।८४-८५।।

शिशिर में जिस समय प्रचण्ड शीत से जड़ता को प्राप्त सभी प्राणी रात्रि में शयन करते हैं, उस समय भी यह हिमालय से सागर तक जाती रहती है, कभी भी विश्राम नहीं करती; रातदिन मानो वह मनुष्यों को कर्मपरायण होने का उपदेश देती है; इस प्रकार शीत और उष्णभावों को जीत कर गङ्गा विजयिनी होकर सुशोभित है।।८६-८७।।

प्रतिक्षण नवीन लहरों से निकलती हुई वह पुरानी होते हुए भी नवीन है और श्रेष्ठ

In autumn (*Hemant*) when an all-round silence descends upon the *Himalaya* and the peaks of the mountains become snowclad *Śrī Gaṅgā* seems to be lost in meditation of *Nārāyaṇa* (*Badrīviśāla*). On the plains She bathes Her devotees at day break and seems to call them with Her waving hands.[84-85]

In *Śiśira* the entire world gets benumbed in the grip of cold and hibernates in darkness. She keeps on travelling from the *Himalaya* to the ocean untiringly. It seems as if She preaches human beings the value of action unceasingly. *Gaṅgā* abides as a conqueror of the extremes of heat and cold as well as happiness and sorrow.[86-87]

She bears the old waves and yet She renews Herself

रैखिकं निर्दिशन्तीव सर्गक्रमं
शेषशय्याऽधिरूढान्तिके गच्छति ।।८८।।
सम्प्राप्य सुन्दरवने कपिलाश्रमञ्च
स्मृत्वाऽभिशापमसकृत् सगरात्मजानाम् ।
अद्यापि रोधसि कृपेच्छुकजीवजन्तोः
सन्तारणं प्रकुरुतेऽमृततोयपुञ्जैः ।।८९।।

इत्थं हैमवती तुषारशिखरात् पीयूषसंवाहिनी
प्रादुर्भूय तरङ्गिणी विजयते भूलोकसञ्चारिणी ।
कुम्भीरैः शिशुमार-मीन-कमठ-व्यालादिभिर्भूषिता
बङ्गीयोपसमुद्रगाऽवतु नरान् गङ्गा पुनीता शुभा ।।९०।।

गङ्गा कभी रुकती नहीं, वह अविराम है; मानों सृष्टि के रैखिक सर्गक्रम को बताती हुई वह शेषशायी भगवान् विष्णु के पास चरम विश्रान्ति के लिये जाती है। सुन्दरवन में कपिल मुनि के आश्रम में पहुंच कर वह बार-बार सगर पुत्रों के शाप को याद कर आज भी तट पर कृपा के इच्छुक जीव जन्तुओं का अमृत जल से संतारण (उद्धार) करती है।।८८-८९।।

इस प्रकार हिमालय से उद्भूत बर्फ की चोटियों से पीयूष को ले जाने वाली तरङ्गिणी भूलोक में सञ्चार करने लगी; ऐसी मछलियों कछुओं , शिशुमारों, मकरों, सांपों से विभूषित पवित्र गङ्गा बंगाल की खाड़ी में जाती हुई मनुष्यों की रक्षा करें।

perpetually.The magnificent *Gaṅgā* is irrepressible. Delineating the great epic of creation She as if travels to *Śeṣaśāyī Bhagavān Viṣṇu* for Her ultimate repose. On reaching the *āśram* of *Kapil Muni* at *Sundarvan* She recalls again and again the curse hurled at the sons of *Sagar* and continues redeeming creatures eager to receive Her grace.[88-89]

Thus sprung from the snow-capped peak of the *Himalaya*, the nectar-bearing surge(*Gaṅgā*) started flowing on the earth (*Bhūloka*). Let the holy *Gaṅgā* who is beset with marine creatures protect the humanity while moving towards the Bay of Bengal. The confluence at *Gaṅgā Sāgar* is a holy pilgrimage which brings

गङ्गासागरसङ्गमो हि परमं तीर्थं महापावनं
संसारागमनं रुणद्धि सुतरां मोक्षार्थिनां नित्यशः।
ये वाञ्छन्ति यथा तथैव ददते तेभ्यः फलं दुर्लभम्
गङ्गासागरसङ्गमस्नपनजं पुण्यं प्रकृष्टं स्मृतम् ।।९१।।

श्रीनारायणपादपद्मजनितां गङ्गां सुधास्यन्दिनीं
श्रीनारायणपादपद्मनिलयामम्भोनिधौ पावनीम् ।
नित्यं नूतनभङ्गभूरिभरितामज्ञेयतत्त्वामहो
उत्पत्तिप्रलयक्रमां त्रिपथगां सत्यां परां धीमहि ।।९२।।

गङ्गासागर संगम पवित्र तीर्थ है जो मोक्ष के इच्छुक जीवों के संसारागमन को रोकता है; जो जैसा चाहते हैं उन्हें गंगासागर में स्नान करने से प्राप्त पुण्य वही फल प्रदान करता है। श्रीनारायण के चरण कमलों से उत्पन्न अमृत प्रवाह वाली, समुद्र में श्री नारायण के चरण कमलों में ही लय होने वाली, पवित्र, नित्य नवीन तरंगों से भरी हुई, अज्ञात रहस्यों वाली, उत्पत्ति और प्रलय के क्रम को बताने वाली, परात्पर सत्यस्वरूपा श्री गङ्गा को हम जानें।।९०-९२।।

an end to the cycle of rebirth for the souls who crave for liberation. A dip at the *Gaṅgā Sāgar* fulfils every desire of human beings. Let us aspire to know that *Gaṅgā* who is born out of the lotus-like feet of *Śrī Nārāyaṇa*. She is holy and replete with ever renewing waves. She is the repository of unresolved mistery of life and explains the origin and the end of the creation and She is the Final Truth incarnate.[90-92]



अणोरणीयसीं गङ्गां ब्रह्मद्रवस्वरूपिणीम् ।
वेदाद्यगोचरां नित्यां प्रणमामि परात्पराम् ॥

## नवमः सर्गः
## अध्यात्म-वर्णनम्

यामामनन्ति मुनयः चितितोयरूपां
ब्राह्मीं द्युतिं सुललितां दधतीमरूपाम्।
अव्याकृताञ्च निगमागमवेद्यतत्त्वां
तामादिशक्तिममृतां प्रणमामि गङ्गाम् ।।१।।

ज्ञानाम्भसा क्षरति कल्मषपङ्कजालं
अज्ञानजं जनन-मृत्यु-जरादिरूपम् ।
चैतन्यवारिपरिपूर्णतटां मनोज्ञां
तामादिशक्तिममृतां प्रणमामि गङ्गाम्[1]।।२।।

जिसे मुनि चैतन्य जल रूप कहते हैं, जो ब्राह्मी द्युति अर्थात् परब्रह्म परमात्मा के प्रकाश को धारण करती हैं, जो अगुण तथा अरूप हैं, अव्याकृत हैं, निगम और आगम द्वारा जिनके वास्तविक तत्त्व को जाना जा सकता है; आदि शक्ति रूपा अमृतमयी उस गङ्गा को मैं प्रणाम करती हूं। जो सम्पूर्ण अविद्या से उत्पन्न अज्ञान रूप पाप, जो जन्म-मृत्यु-जरा (बुढ़ापा) के रूप वाला है, को ज्ञान रूपी जल से

**Transcendence**

I bow in reverence to *Gaṅgā*, the symbol of primal power and immortatily. The sages have known Her as the water of revelation. She holds the lustre of Supreme Reality. She is free from attributes and happens to be formless and remains undistorted (*avyākṛta*), Her reality can be known through *Nigama* and *Āgama* alone. *Gaṅgā* wipes out ignorance born out of *Avidyā*. She expunges ephemerality adumbrated in the cycle of birth, death and decay by Her shower of enlightenment. I bow to *Gaṅgā* who

ज्ञानार्थकाद् गमयतेर्विमलं स्वरूपं
प्राप्त्यर्थकादपि परं पदमद्वितीयम्[२] ।
आसादयत्यखिललोकहिता वरेण्या
गङ्गेति पावनमनोहरनामधेया ।।३।।
वेदैरवेद्य-विभु-निर्गुण-निर्विकारं
यन्नेति-नेति[३] वचसा श्रुतयो गृणन्ति ।
नीराकृतौ परिणतं हि तदेव तत्त्वं
ब्रह्मद्रवेति ऋषिभिः परिगीयमानम् ।।४।।
यो वै रसस्त्वभिहितः[४] श्रुतिसारविद्भिः
आह्लादयत् सहृदयान् कविकाव्यतत्त्वम् ।

धो डालती है; उस चैतन्य रूपी जल से पूर्ण तटों वाली मनोहर गङ्गा को प्रणाम करती हूं। गङ्गा शब्द गम् धातु से बना है,जो ज्ञानार्थक भी है और प्राप्त्यर्थक भी। 'गमयति प्रापयति ज्ञापयति वा भगवत्पदं' इस व्युत्पत्ति के आधार पर गङ्गा अद्वितीय परम पद को प्राप्त कराती है तथा सम्पूर्ण लोक का हित करने वाली एवं श्रेष्ठ है।।१-३।।

जो तत्त्व वेदों से भी नहीं ज्ञात होता; व्यापक, निर्गुण निर्विकार जिस तत्त्व को श्रुतियां 'नेति-नेति' कहती हैं, वही नीराकार रूप में परिणत होकर ऋषियों द्वारा ब्रह्मद्रव शब्द से कहा जाता है अर्थात् ब्रह्म ही द्रव-जल हो गया है। वेदों के मर्मज्ञों ने जिसे रस कहा है और जो कवि के काव्य का सार बन कर सहृदयों को

brims with Her water of knowledge.The word *Gaṅgā* is derived out of the verb root '*gaṁ*' which denotes knowledge and helps to attain enlightenment as well. On the basis of this very etymology, which means both 'goes' and 'reveals', *Gaṅgā* reveals primordial knowledge. She helps to attain the Ultimate Reality. She is the benefactor of the entire creation.[1-3]

That element which is not decipherable even by the *Vedas*, which is all pervading and untouched by the attributes of change (*Nirguṇa,Nirvikāra*) is addressed by *Śrutis* as '*neti-neti*', gets transformed into an aqueous form and is known as *Brahma-drava* by *ṛṣis*. It is believed that *Brahman* Himself assumes the form of water.The element which the knowers of the secret of the *Vedas*

गङ्गापयः स्त्रवति स्वादु सुधामयं तत्
ब्रह्मद्रवेति ऋषिभिः परिगीयमानम् ।।५।।
आकाशमण्डलगतोज्ज्वलकान्तिमत्या
विज्ञापितं दिविपदं परमस्य विष्णोः ।
मन्दाकिनी सुरधुनीति जगत्प्रसिद्धा
गङ्गेति दीव्यति चिरं जयति त्रिलोक्याम् ।।६।।
व्याप्नोति विष्णुरखिलं परयाऽऽत्मशक्त्या
ब्रह्माण्ड-मण्डलमखण्डमशेषमेकः ।
सोऽयं हरिस्त्रिभुवनं प्रमिणोति मन्ये
पादत्रयेण परिसीमयितुं समष्टिम्[५]।।७।।
सानन्दचिन्मयपदेषु हरेर्लसन्ती
पीयूषधारधवला नु ऋतम्भरा[६] सा ।
आलोकवारिसरसा किल राजमाना
गङ्गेति दीव्यति चिरं जयति त्रिलोक्याम् ।।८।।

आह्लादित करता है, वही स्वादिष्ट अमृतमय तत्त्व गङ्गाजल के रूप में बहने वाला ब्रह्मद्रव है।।४-५।।

जो आकाश मण्डल में उज्ज्वल कान्ति से प्रकाशित है और विष्णु अर्थात् व्यापनशील परब्रह्म के पद को बताती है; वही आकाश गङ्गा मन्दाकिनी, सुरधुनी नाम से जगत् में विख्यात है और गङ्गा नाम से तीनों लोकों में जय-जयकार से युक्त है। विष्णु (परब्रह्म) अपनी आत्मशक्ति से अखण्ड ब्रह्माण्ड को व्याप्त कर लेता है ; वही अपने तीन पैरों से समष्टि को समेटने के लिये त्रिभुवन को नापता है— ऐसा कहा जाता है। इसी विष्णु के आनन्दमय चिन्मय पदों में पीयूषधार सी धवल

have addressed as *Rasa*, which delights a connoisseur as the sap of poesy, has become the *Brahma-drava*.[4 -5]

She reveals Herself in the space as a resplendent brilliance and unveils about the secret of the all-pervading Supreme Reality, i.e. *Parabrahman*. *Gaṅgā* is venerated in the three *lokas* as a luminous galaxy. She is extolled both as *Mandākinī* and *Surdhunī* in this world. The myth of *Viṣṇu*'s measuring of three *lokas* tells that His energy permeates through the universe. *Gaṅgā* reigns as

नारा जलान्ययनमस्य स भासमानः
चैतन्यवारितरलो विरलश्च देवः[७] ।
नारायणोऽर्कवलये सुविराजमानो
विद्योतते नभसि जीवयितुं त्रिलोकीम् ।।९।।

तस्य प्रभैव गगने तमसः परस्ताद्
ज्योतिःसमूहसलिला गमनोद्यतेव ।
गङ्गापदेन विदिता प्रसृता समन्ताद्
विद्योतते नभसि जीवयितुं त्रिलोकीम् ।।१०।।

या 'त्वप्रकेतसलिला'[८] सदसत्स्वरूपा
सैव प्रकेतसलिले परिवर्तमाना ।
आनन्दमङ्गलमयी चितिधाररूपा
धातुः कमण्डलुगता विदिता प्रबुद्धैः ।।११।।

ऋतम्भरा गङ्गा आलोक रूपी जल से सरस होकर आकाश-गङ्गा के रूप में विराजमान है। 'नारा कारण जल ही है अयन जिस का 'वह चैतन्य वारि से तरल देदीप्यमान नारायण सूर्य मण्डल में विद्यमान हो कर तीनों लोकों में जीवन का सञ्चार करने के लिये आकाश में चमकता है । उसकी प्रभा (=सूर्यप्रभा) अन्धकार को चीरती हुई ज्योतिः समूह रूपी जल वाली जब गमन (=फैलने ) को उद्यत होती है तो गङ्गा नाम से जानी जाती है।।६-१०।।

जो सत् और असत् - अनिर्वचनीय 'अप्रकेत-सलिल' है, जब वही ' प्रकेत-सलिल' के रूप में परावर्तित होती है ; तब आनन्द तथा श्रेयस्करी चैतन्य धारा ब्रह्मा के कमण्डलु में आ गई--ऐसा ज्ञानी जन मानते हैं अर्थात् चिति की निराकार

the milky way saturated with the light of consciousness. She resides woven to the sublime steps of *Viṣṇu*. *Surya-Nārāyaṇa* (Sun) existing in the solar-system shines to resuscitate the entire creation. The light of the Sun which pierces through darkness is known as *Gaṅgā*.[6-10]

It is said that when the intangible *Gaṅgā* evolves as the tangible wave of consciousness generating *Ānand*, She enters the chalice of *Brahmā*. The transcedental state of consciousness is

